चतुःशतप्रतिक्रान्तिविस्तृतं पाण्डुकवनमिति । नन्दनसौमनसाभ्या-मेकादशैकादशसहस्राण्यारुह्य प्रदेशपरिहाणिर्विष्कम्भस्येति*¹ ॥

तत्र भरतहैमवतहरिविदेहरम्यक†हैरण्यवतैरा-वतवर्षाः क्षेत्राणि ॥ १० ॥

5 तत्र जम्बूद्वीपे भरतं हैमवतं हरयो विदेहा रम्यकं हैरण्यवतमैरावतमिति सप्त वंशाः क्षेत्राणि भवन्ति । भरतस्यो-त्तरतो हैमवतं हैमवतस्योत्तरतो हरय इत्येवं शेषाः । वंशा वर्षा

* K omits इति ।   † P. रम्यक् ।

१ S. अयं च मेरुगिरिर्न सर्वत्र समप्रमाणप्रवृद्धः किन्तु प्रदेशपरि-हाण्या परिहीयमानः प्रवृद्ध इति तद्दर्शयति × × × × × × नन्दना-दूर्ध्वं सौमनसाच्चाधः किल मध्ये एकादशैकादशयोजनसहस्राण्यारुह्य योजन-सहस्रं परिहीयते विष्कम्भस्येति । ऊर्ध्वं सौमनसान्नन्दनवनाच्चाधो न सूरिणा परिहाणिरुक्ता । × × × एषा च परिहाणिराचार्योक्ता न मनागपि गणितप्रत्यया संगच्छते । यतः सौमनसवने ऽन्तर्विष्कम्भः सहस्र-त्रयं शतद्वयं च द्विसप्तत्यधिकमष्टौ चैकादशभागाः बहिर्विष्कम्भः पुनः सहस्रचतुष्टयं शतद्वयं च द्विसप्तत्यधिकमष्टौ चैकादशभागा योजनस्य । तत्राचार्योक्तपरिहाण्या नैको ऽपि विष्कम्भ आगच्छति न चैतागमसत्या वागमे ऽधीतत्वात् प्रद्युम्नयाह्निकयेति । गणितशास्त्रविदो हि परिहाणि-मन्यथा वर्णयन्त्यार्षानुसारिणः । मेरुयोजनानामूर्ध्वमेका लब्धा । तत्राधो भूमावदृश्यं योजनसहस्रमपचयरहितम् ।

वास्या इति चैषां गुणतः पर्यायनामानि भवन्ति । सर्वेषां चैषां व्यवहारनयापेक्षादा*दित्यकृताद्दिग्नियमादुत्तरतो मेरुर्भवति । लोकमध्यावस्थितं[१] चा†ष्टप्रदेशं रुचकं दिग्नियमहेतुं प्रतीत्य यथासम्भवं भवतीति ॥

## तद्विभाजिनः पूर्वापरायता हिमवन्महाहिमवन्निषध-नीलरुक्मिशिखरिणो वर्षधरपर्वताः ॥ ११ ॥

तेषां वर्षाणां विभक्तारो हिमवान् महाहिमवान् निषधो नीलो रुक्मी शिखरी इत्येते षड्वर्षधराः पर्वताः‡ । भरतस्य हैमवतस्य च विभक्ता हिमवान् हैमवतस्य हरिवर्षस्य च विभक्ता महाहिमवानित्येवं शेषाः ॥

तत्र पञ्च योजनशतानि षड्विंशानि षट् चैकोनविंशतिभागा भरतविष्कम्भः[२] । स द्विर्द्विर्हिमवद्धैमवतादीनामा विदेहेभ्यः । परतो विदेहेभ्यो ऽर्धार्धहीनाः ॥ पञ्चविंशतियोजनान्यवगाढो योजनशतोच्छ्रायो हिमवान् । तद्द्विर्महाहिमवान् । तद्द्विर्निषध इति ॥

भरतवर्षस्य योजनानां चतुर्दशसहस्राणि चत्वारि शतान्येक-

* K. S. अपेक्षयादित्य० । † C तु for च । ‡ K वर्षधरपर्वताः ।

१ अथ नैश्चयिकी दिक्कथं प्रतिपत्तव्येत्यत आह । S ।

२ S अपरे त्विदमेव भाष्यवाक्यं सूत्रीकृत्याधीयन्ते ।

सप्ततानि षट् च भागा* विशेषतो† ज्या। इषुर्यथोक्तो विष्कम्भः। धनुःकाष्ठं चतुर्दशसहस्राणि शतानि पञ्चाष्टाविंशान्येकादश च भागाः साधिकाः‡ ॥

भरतक्षेत्रमध्ये पूर्वापरायत उभयतः समुद्रमवगाढो वैताढ्य-
5 पर्वतः§ षड् योजनानि सक्रोशानि धरणिमवगाढः पञ्चाश-
द्विस्तरतः|| पञ्चविंशत्युच्छ्रितः ॥

विदेहेषु निषधस्योत्तरतो मन्दरस्य दक्षिणतः काञ्चन-पर्वतशतेन चित्रकूटेन विचित्रकूटेन चोपशोभिता देवकुरवो विष्कम्भेणैकादश योजनसहस्राण्यष्टौ च शतानि द्विचत्वारिंशानि
10 द्वौ च भागौ। एवमेवोत्तरेणोत्तराः कुरवश्चित्रकूटविचित्रकूट-हीना द्वाभ्यां च काञ्चनाभ्यामेव यमक¶पर्वताभ्यां विराजिताः ॥

विदेहा मन्दरदेवकुरूत्तरकुरुभिर्विभक्ताः क्षेत्रान्तरवद्भ-वन्ति। पूर्वे चापरे च। पूर्वेषु षोडश चक्रवर्तिविजया नदी-पर्वतविभक्ताः परस्परागमाः** अपरे ऽप्येवंलक्षणाः षोडशैव ॥

15 तुल्यायामविष्कम्भावगाहोच्छ्रायौ दक्षिणोत्तरौ वैताढ्यौ तथा हिमवच्छिखरिणौ महाहिमवद्रुक्मिणौ निषधनीलौ चेति ॥

क्षुद्रमन्दरास्तु चत्वारो ऽपि धातकीखण्डक††पुष्करार्धका महामन्दरात्पञ्चदशभिर्योजनसहस्रैर्हीनोच्छ्रायाः। षड्भिर्योजन-

---

* C षड्भागा।　† K विशेषात् D विशेषोना B षट्चसागरविशेषात्।
‡ K omits साधिका।　§ C वैताढ्य K विजयार्धे।　|| K विस्तृतः।
¶ B जमक०।　** परस्परस्यागमाः।　†† C omit क।

शतैर्धरणितले हीनविष्कम्भाः। तेषां प्रथमं काण्डं महामन्दर-
तुल्यम्। द्वितीयं सप्तभिर्हीनम्। तृतीयमष्टाभिः। भद्रशाल-
नन्दनवने महामन्दरवत्। ततो ऽर्धषट्पञ्चाशद्योजनसहस्राणि
सौमनसं पञ्चशतं विस्तृतम्*। ततो ऽष्टाविंशतिं†सहस्राणि चतु-
र्नवतिचतुःशतविस्तृतमेव पाण्डकं भवति। उपरि चाधश्च 5
विष्कम्भो ऽवगाहश्च तुल्यो महामन्दरेण। चूलिका चेति॥

विष्कम्भकृतेर्दशगुणाया मूलं वृत्तपरिक्षेपः। स विष्कम्भ-
पादाभ्यस्तो गणितम्। इच्छावगाहोनावगाहाभ्यस्तस्य विष्कम्भस्य
चतुर्गुणस्य मूलं ज्या। ज्याविष्कम्भयोर्वर्गविशेषमूलं विष्कम्भाच्छोध्यं
शेषार्धमिषुः। इषुवर्गस्य षड्गुणस्य ज्यावर्गयुतस्य कृतस्य‡ मूलं 10
धनुःकाष्ठम्। ज्यावर्गचतुर्भागयुक्त§मिषुवर्गमिषुविभक्तं तत्प्रकृति-
वृत्तविष्कम्भः। उदग्धनुःकाष्ठाद्दक्षिणं शोध्यं शेषार्धं बाहुरिति॥

अनेन करणाभ्युपायेन सर्वक्षेत्राणां|| सर्वपर्वतानामायाम-
विष्कम्भज्येषुधनुःकाष्ठपरिमाणानि ज्ञातव्यानि[1]॥

## द्विर्धातकीखण्डे ॥ १२ ॥ 15

* K पञ्चशतविस्तृतमेव। † K अष्टाविंशतिः। ‡ A C omit. § K इत।
|| B क्षेत्रवेदाढ्यादिपर्वतानां A. C क्षेत्राणां वेतथादिनां K वैताढ्यादिपर्वतानां।

१ H. अपरे पुनर्विद्वांसो ऽतिबहूनि स्वयं विरचय्यास्मिन्प्रस्तावे सूत्रा-
ण्यधीयते विस्तरदर्शनाभिप्रायेण तत्त्वयुक्तमयं सङ्ग्रहः सूरिणा संक्षेपः कृत
इति अतो ऽत्र विस्ताराभिधानमप्राचीनमाचक्षते प्रवचननिपुणाः अथ

ये एते मन्दरवंशवर्षधरा* जम्बूद्वीपे ऽभिहिता एते द्विगुणा धातकीखण्डे द्वाभ्यामिष्वाकारपर्वताभ्यां दक्षिणोत्तरायताभ्यां विभक्ताः । एभिरेव नामभिर्जम्बूद्वीपकसमसङ्ख्याः पूर्वार्धे चापरार्धे च चक्रारकसंस्थिता† निषधसमोच्छ्रायाः कालोदलवणजल-
5 स्पर्शिनो वंशधराः सेष्वाकाराः । अरविवरसंस्थिता वंशा इति ॥

## पुष्करार्धे च ॥ १३ ॥

यश्च धातकीखण्डे मन्दरादीनां सेष्वाकारपर्वतानां‡ सङ्ख्याविषयनियमः§ स एव पुष्करार्धे वेदितव्यः ॥

ततः परं मानुषोत्तरो नाम|| पर्वतो मानुषलोकपरिक्षेपी
10 सुनगरप्राकारवृत्तः पुष्करवरद्वीपार्धविनिविष्टः¶ काञ्चनमयः** सप्तदशैकविंशति††योजनशतान्युच्छ्रितश्चत्वारि त्रिंशानि क्रोशं चाधो धरणीतलमवगाढो योजनसहस्रं द्वाविंश‡‡मधस्ताद्विस्तृतः सप्तशतानि त्रयोविंशानि मध्ये चत्वारि चतुर्विंशान्युपरीति ॥

---

* K मन्दरवंशाः । † K चक्रारसंस्थिता । ‡ K सेष्वाकारमन्दरादीनां पर्वतानां ।
§ K विशेषनियमः । || K नामा । ¶ C धं =750.
** D काञ्चन । †† K विंशानि । ‡‡ C द्वाविंशतिम् ।

---

विस्तरतो विवक्षितस्ततो ग्रन्थलक्षापरिभाषिताया जम्बूद्वीपदेशनायाः पटुप्रज्ञैस्तैर्विस्तृताद्भिरपि कियदत्र विस्तृतं स्यात् विस्तारार्थिनो वा बहुश्रुताः सिद्धान्त एव तत्कृतसूत्रेभ्य इत्यत उपेक्षणीयस्तदभिप्राय इति ॥

Contrast Doctor Bhandarkar's Report in the search for Sanskrit Mss for the year 1883-84 P 408 and 409.

न कदाचिदस्मात्परतो जन्मतः संहरणतो वा चारणविद्या-धरर्द्धिप्राप्ता अपि मनुष्या भूतपूर्वा भवन्ति भविष्यन्ति च । अन्यत्र[1] समुद्घातोपपाताभ्याम् । अत एव च मानुषोत्तर इत्युच्यते[2] ॥

तदेवमर्वाङ् मानुषोत्तरस्यार्धतृतीया द्वीपाः समुद्रद्वयं 5 पञ्चमन्दराः पञ्चत्रिंशत्क्षेत्राणि त्रिंशद्वर्षधरपर्वताः पञ्च देवकुरवः पञ्चोत्तराः कुरवः शतं षष्ठ्यधिकं चक्रवर्तिविजयानां द्वे शते पञ्चपञ्चाशदधिके* जनपदानामन्तरद्वीपाः षट्पञ्चाशदिति ॥

अत्राह । उक्तं भवता मानुषस्य स्वभावमार्दवार्जवत्वं चेति

तत्र के मनुष्याः क्व चेति । अत्रोच्यते 10

## प्राग्मानुषोत्तरान्मनुष्याः ॥ १४ ॥

* K पञ्चपञ्चाशे इति प्रत्यन्तरेजन० । [VI 18]

१ S. मारणान्तिकसमुद्घातेन समुपहतः कश्चिदर्धतृतीयद्वीपान्तरवर्ती बहिर्वर्तिद्वीपसमुद्रेषूत्पत्स्यते तेन चोत्पत्तिप्रदेशे प्रक्षिप्तमात्मप्रदेशजाल-मिलिकागतिना पश्चात् म्रियते तत्र व्यवस्थित इति ॥ तथोपपातमङ्गीकृत्य जन्माभिसंबध्यते । बहिर्द्वीपसमुद्रवर्तिना असुमता मनुष्यायुर्निबद्धमर्ध-तृतीयद्वीपाभ्यन्तरमेवोत्पत्स्यते वक्रगत्या तस्य तन्मनुष्यायुर्वक्रकाले विपच्यते तदैव चासौ मनुष्यो जातस्तदुदयवर्तित्वात् ॥

२ S. ये त्वेतद्वाह्यं गमनप्रतिषेधद्वारेण विद्याधरर्द्धिप्राप्तानामाचक्षते तेषामागमविरोधः । सर्वेषां हि चारणादीनामागमे गमनाभ्यनुज्ञानात् । बहिर्जन्ममरणे न संभाव्येते ॥

प्राग्मानुषोत्तरात्पर्वतात्पञ्चत्रिंशत्सु क्षेत्रेषु सान्तरद्वीपेषु जन्मतो मनुष्या भवन्ति। संहरणविद्यर्द्धियोगात्तु* सर्वेष्वर्धतृतीयेषु द्वीपेषु समुद्रद्वये च समन्दरशिखरेष्विति॥

भारतका हैमवतका इत्येवमादयः क्षेत्रविभागेन। जम्बू-
5 द्वीपका† लवणका इत्येवमादयो द्वीपसमुद्रविभागेनेति॥

## आर्या म्लिशश्च‡ ॥ १५ ॥

द्विविधा मनुष्या भवन्ति। आर्या म्लिशश्च॥

तत्रार्याः षड्विधाः। क्षेत्रार्याः जात्यार्याः कुलार्याः कर्मार्याः शिल्पार्या भाषार्या इति। तत्र क्षेत्रार्याः पञ्चदशसु कर्मभूमिषु
10 जाताः तद्यथा भरतेष्वर्धषड्विंशतिषु जनपदेषु जाताः शेषेषु[१] च चक्रवर्तिविजयेषु। जात्यार्या इक्ष्वाकवो विदेहा हरयो ऽम्बष्ठाः ज्ञाताः कुरवो बुंबुनालाः§ उग्रा भोगा|| राजन्या इत्येवमादयः। कुलार्याः कुलकराश्चक्रवर्तिनो बलदेवा वासुदेवा ये चान्ये आ तृतीयादा पञ्चमादा सप्तमाद्वा कुलकरेभ्यो वा विशुद्धान्वयप्रकृतयः।
15 कर्मार्या यजनयाजनाध्ययनाध्यापनप्रयोग¶कृषिलिपिवाणिज्य-योनिपोषणवृत्तयः। शिल्पार्यास्तन्तुवाय**कुलालनापिततुन्नवाय-

* K. B omit तु। † K जाम्बूद्वीपका लावणकाः। ‡ B म्लेच्छाश्च।
§ K बुंबुणाला। || K भोजाः। ¶ B प्रयोगे K वनप्रयोग। ** B तन्तुवाय।

१ D Colophon भरतोत्तरार्धजा मनुष्या अपि सुगुरूपदेशादिसामग्रीसद्भावे योग्यत्वेन चारित्राद्यवाप्य सिध्यन्तीति समय॥

देवटादयो* ऽप्यसावद्या आगर्हिता† जीवाः । भाषार्या नाम ये शिष्टभाषानियतवर्णं लोकरूढस्पष्टशब्दं पञ्चविधानामप्यार्याणां संव्यवहारं भाषन्ते ॥

अतो विपरीता‡ म्लिशः । तद्यथा । हिमवतश्च§तसृषु विदिक्षु त्रीणि योजनशतानि लवणसमुद्रमवगाह्य चतसृणां मनुष्यविजातीनां चत्वारो ऽन्तरद्वीपा|| भवन्ति त्रियोजनशत-विष्कम्भायामाः । तद्यथा । एकोरुकाणामाभाषकाणां¶ लाङ्गू-लिकानां** वैषाणिकाना††मिति ॥ चत्वारि योजनशतान्यवगाह्य चतुर्योजनशतायामविष्कम्भा एवान्तरद्वीपाः । तद्यथा । हय-कर्णानां गजकर्णानां गोकर्णानां शष्कुली‡‡कर्णानामिति ॥ पञ्च शतान्यवगाह्य पञ्चयोजनशतायामविष्कम्भा एवान्तरद्वीपाः । तद्यथा । गजमुखानां§§ व्याघ्रमुखानामादर्शमुखानां गोमुखाना-मिति ॥ षड् योजनशतान्यवगाह्य तावदायामविष्कम्भा एवान्तर-द्वीपाः । तद्यथा । अश्वमुखानां हस्तिमुखानां सिंहमुखानां व्याघ्र-मुखानामिति ॥ सप्त योजनशतान्यवगाह्य तावदायामविष्कम्भा

---

* A C दवदादयो K तुम्बवायेत्येवमादयो । † K अगर्हिता । ‡ B वैपरीता ।

§ Perhaps S adds हिमवतः प्राक्पश्चाच्च चत० । || K अनन्तरद्वीपा ।

¶ A अभाषिकाणां K आभाषिका D अभाषिकाणां ।

** B लाङ्गूलिनां लाङ्गुलीनां । †† B विषाणिनां ।

‡‡ S शाष्कलीक B शष्कुलि ।

§§ A. S आदर्शमेषहयगजमुखनामानः ।

एवान्तरद्वीपाः । तद्यथा । अश्वकर्णसिंहकर्णहस्तिकर्ण*कर्ण-
प्रावरणनामानः ॥ अष्टौ योजनशतान्यवगाह्याष्टयोजनशताया-
मविष्कम्भा एवान्तरद्वीपाः । तद्यथा । उल्का†मुखविद्युज्जिह्व‡-
मेष§मुखविद्युद्दन्तनामानः ॥ नवयोजनशतान्यवगाह्य नवयोजन-
5 शतायामविष्कम्भा एवान्तरद्वीपा भवन्ति । तद्यथा । घनदन्त-
गूढदन्तविशिष्ट‖दन्तशुद्धदन्तनामानः ॥ एकोरुकाणामेकोरुक-
द्वीपः । एवं शेषाणामपि स्वनामभिस्तुल्यनामानो वेदितव्याः ॥
शिखरिणो ऽप्येवमेवेत्येवं षट्पञ्चाशदिति[१] ॥

भरतैरावतविदेहाः कर्मभूमयो ऽन्यत्र देवकुरू-
10 त्तरकुरुभ्यः ॥ १६ ॥

मनुष्यक्षेत्रे भरतैरावतविदेहाः पञ्चदश कर्मभूमयो भवन्ति ।
अन्यत्र देवकुरूत्तरकुरुभ्यः । संसारदुर्गान्तगमकस्य सम्यग्दर्शन-
ज्ञानचारित्रात्मकस्य मोक्षमार्गस्य ज्ञातारः कर्तार उपदेष्टारश्च
भगवन्तः परमर्षयस्तीर्थकरा अत्रोत्पद्यन्ते । अत्रैव जाताः

* C adds हरि। † K उलूका, C उलका। ‡ D विद्युज्जिह्व।
§ B हेष। ‖ C श्रेष्ठ।

१ S. H —add at the end of the Sûtra:—

एतच्चान्तरद्वीपकभाष्यं प्रायो विनाशितं सर्वत्र कैरपि दुर्विदग्धैर्येन
षण्णवतिरन्तरद्वीपका भाष्येषु दृश्यन्ते। अनार्षं चैतदध्यवसीयते जीवाभि-
गमादिषु षट्पञ्चाशदन्तरद्वीपकाध्ययनात् । नापि वाचकमुख्यः सूत्रोल्लङ्घने-
नाभिदधात्यसंभाव्यमानत्वात् । तस्मात्सिद्धान्तिकपाशैर्विनाशितमिदमिति ॥

सिध्यन्ति नान्यत्र। अतो निर्वाणाय कर्मणः सिद्धिभूमयः कर्मभूमय इति। शेषास्तु विंशतिर्वंशाः सान्तरद्वीपा अकर्मभूमयो भवन्ति। देवकुरूत्तरकुरवस्तु कर्मभूम्यभ्यन्तरा अप्यकर्मभूमय इति॥

## नृस्थिती परापरे त्रिपल्योपमान्तर्मुहूर्ते॥ १७॥ 5

नरो नरा मनुष्या मानुषा इत्यनर्थान्तरम्। मनुष्याणां परा स्थितिस्त्रीणि पल्योपमान्यपरान्तर्मुहूर्तेति॥

## तिर्यग्योनीनां च*॥ १८॥

तिर्यग्योनिजानां च परापरे स्थिती त्रिपल्योपमान्तर्मुहूर्ते भवतो यथासङ्ख्यमेव। पृथक्करणं† यथासङ्ख्यदोषविनिवृत्त्यर्थम्। 10 इतरथा इदमेकमेव‡ सूत्रमभविष्यदुभयत्र चोभे यथासङ्ख्यं§ स्यातामिति|| ॥

द्विविधा चैषां मनुष्यतिर्यग्योनिजानां स्थितिः। भवस्थितिः कायस्थितिश्च। मनुष्याणां यथोक्ते त्रिपल्योपमान्तर्मुहूर्ते परापरे भवस्थिती। कायस्थितिस्तु परा सप्ताष्टौ वा भवग्रहणानि॥ 15 तिर्यग्योनिजानां च यथोक्ते समासतः परापरे भवस्थिती। व्यासतस्तु शुद्धपृथिवीकायस्य परा द्वादश वर्षसहस्राणि। खर-

---

* B तिर्यग्योनिजानां च। Not marked as a separate sûtra either by A or C, and B and K do not number sûtras.

† K पृथग्योगकरणं। ‡ K यद्येकमेव।

§ K यथा for यथासङ्ख्यं। || C omits from इतरथा to उभयत्र।

पृथिवीकायस्य द्वाविंशतिः । अप्कायस्य सप्त । वायुकायस्य त्रीणि । तेजःकायस्य त्रीणि रात्रिंदिनानि* । वनस्पतिकायस्य दश वर्षसहस्राणि । एषां कायस्थितिरसङ्ख्येया अवसर्पिण्युत्सर्पिण्यो वनस्पतिकायस्यानन्ताः । द्वीन्द्रियाणां भवस्थितिर्द्वादश वर्षाणि । त्रीन्द्रियाणामेकोनपञ्चाशद्रात्रिंदिनानि । चतुरिन्द्रियाणां षण्मासाः । एषां कायस्थितिः सङ्ख्येयानि वर्षसहस्राणि । पञ्चेन्द्रियतिर्यग्योनिजाः पञ्चविधाः । तद्यथा । मत्स्या उरगाः परिसर्पाः पक्षिणश्चतुष्पदा इति । तत्र मत्स्यानामुरगाणां भुजगानां च पूर्वकोट्येव पक्षिणां पल्योपमासङ्ख्येयभागश्चतुष्पदानां त्रीणि पल्योपमानि गर्भजानां स्थितिः† । तत्र‡ मत्स्यानां भवस्थितिः पूर्वकोटिस्त्रिपञ्चाशदुरगाणां द्विचत्वारिंशद्§भुजगानां द्विसप्ततिः पक्षिणां स्थलचराणां चतुरशीतिर्वर्षसहस्राणि संमूर्छिमानां भवस्थितिः । एषां कायस्थितिः सप्ताष्टौ भवग्रहणानि । सर्वेषां मनुष्यतिर्यग्योनिजानां कायस्थितिरप्यपरान्तर्मुहूर्तं वेति ॥

इति तत्त्वार्थाधिगमे लोकप्रज्ञप्तिर्नामा
तृतीयोऽध्यायः समाप्तः ॥

---

* K रात्रिदिवानि ।  † K भवस्थिति ।  ‡ K तथा for तत्र ।

§ B K, interchange. उरगाणां द्विचत्वारिंशद्वर्षसहस्राणि त्रिपञ्चाशत्परिसर्पाणां ।

# अथ चतुर्थोऽध्यायः ।

अत्राह । उक्तं भवता भवप्रत्ययो ऽवधिर्नारकदेवाना-
मिति [ I. 22 ] । तथौदयिकेषु भावेषु देवगतिरिति [ II. 6 ] ।
केवलिश्रुतसङ्घधर्मदेवावर्णवादो दर्शनमोहस्य [ VI 13 ] । सराग-
संयमादयो दैवस्य [ VI. 20 ] । नारकसम्मूर्छिनो नपुंसकानि ।
न देवाः* [ II. 50 & 51 ] । तत्र के देवाः कतिविधा वेति । 5
अत्रोच्यते ॥

## देवाश्चतुर्निकायाः ॥ १ ॥

देवाश्चतुर्निकाया भवन्ति । तान्परस्ताद्वक्ष्यामः ॥

## तृतीयः पीतलेश्यः ॥ २ ॥

तेषां चतुर्णां देवनिकायानां तृतीयो देवनिकायः पीत 10
लेश्य एव भवति । कश्चासौ । ज्योतिष्क इति ॥

## दशाष्टपञ्चद्वादशविकल्पाः कल्पोपपन्नपर्यन्ताः ॥ ३ ॥

ते च देवनिकाया यथासङ्ख्यमेवंविकल्पा भवन्ति । तद्यथा ।
दशविकल्पा भवनवासिनो ऽसुरादयो वक्ष्यन्ते । अष्टविकल्पा
व्यन्तराः किन्नरादयः । पञ्चविकल्पा ज्योतिष्काः सूर्यादयः । 15
द्वादशविकल्पा वैमानिकाः कल्पोपपन्नपर्यन्ताः सौधर्मादिष्विति ॥

---

* D न देवा इति ।

**इन्द्रसामानिकत्रायस्त्रिंशपारिषद्या*त्मरक्षलोकपालानीकप्रकीर्णकाभियोग्यकिल्बिषिकाश्चैकशः ॥ ४ ॥**

एकैकशश्चैतेषु देवनिकायेषु देवा दशविधा भवन्ति । तद्यथा । इन्द्राः सामानिकाः त्रायस्त्रिंशाः पारिषद्याः आत्मरक्षाः† लोकपालाः अनीकानि अनीकाधिपतयः प्रकीर्णकाः आभियोग्याः किल्बिषिकाश्चेति । तत्रेन्द्राः‡ भवनवासिव्यन्तरज्योतिष्कविमानाधिपतयः । इन्द्रसमानाः सामानिका अमात्यपितृगुरूपाध्यायमहत्तरवत् केवलमिन्द्रत्वहीनाः । त्रायस्त्रिंशा मन्त्रिपुरोहितस्थानीयाः । पारिषद्या वयस्यस्थानीयाः । आत्मरक्षाः शिरोरक्षस्थानीयाः । लोकपाला आरक्षिकार्थचरस्थानीयाः§[१] । अनीकाधिपतयो दण्डनायकस्थानीयाः||[२] । अनीकान्यनीकस्थानीयान्येव । प्रकीर्णकाः पौरजनपदस्थानीयाः । आभियोग्या दासस्थानीयाः । किल्बिषिकाः¶ अन्तस्थस्थानीया इति ॥

**त्रायस्त्रिंशलोकपालवर्ज्या**व्यन्तरज्योतिष्काः ॥ ५ ॥**

* D पार्षद्य । † D आत्मरक्षकाः । ‡ D तत्रेन्द्रा इति ।
§ S ०र्थचर० ? D अर्थचर । || K om ¶ H C किल्बिषाः ।
** D त्रायस्त्रिंशल्लोकपालवर्जा ।

१ S स्वविषयसन्धिरक्षणनिरूपिता आरक्षिका अर्थचराश्चौरोद्धरणिकराजस्थानीयादयस्तत्सदृशा लोकपालाः ॥

२ S सूत्रे वानीकान्येवोपात्तानि सूरिणा नानीकाधिपतयो भाष्ये पुनरुपन्यस्ताः । तदेकत्वमेवानीकानीकाधिपत्योः परिचिन्त्य विवृतमेव भाष्यकारेण । अन्यथा च दशसङ्ख्या भिद्यते ॥

व्यन्तरा ज्योतिष्काश्चाष्टविधा भवन्ति त्रायस्त्रिंशलोक-पालवर्ज्या* इति ॥

## पूर्वयोर्द्वीन्द्राः ॥ ६ ॥

पूर्वयोर्देवनिकाययोर्भवनवासिव्यन्तरयोर्देवविकल्पानां द्वौ द्वाविन्द्रौ भवतः। तद्यथा। भवनवासिषु तावद्द्वौ असुरकुमाराणामिन्द्रौ भवतश्चमरो बलिश्च। नागकुमाराणां धरणो भूतानन्दश्च। विद्युत्कुमाराणां हरिर्हरिसहश्च। सुपर्णकुमाराणां वेणुदेवो वेणुदारी† च। अग्निकुमाराणामग्निशिखो ऽग्निमाणवश्च। वातकुमाराणां वेलम्बः प्रभञ्जनश्च। स्तनितकुमाराणां सुघोषो महाघोषश्च। उदधिकुमाराणां जलकान्तो जलप्रभश्च‡। द्वीपकुमाराणां पूर्णो ऽवशिष्टश्च। दिक्कुमाराणाममितो§ ऽमितवाहनश्चेति ॥ व्यन्तरेष्वपि द्वौ किन्नराणामिन्द्रौ किन्नरः किम्पुरुषश्च। किम्पुरुषाणां सत्पुरुषो महापुरुषश्च। महोरगाणामतिकायो महाकायश्च। गन्धर्वाणां‖ गीतरतिर्गीतयशाश्च। यक्षाणां पूर्णभद्रो मणिभद्रश्च¶। राक्षसानां भीमो महाभीमश्च। भूतानां प्रतिरूपो ऽतिरूपश्च**। पिशाचानां कालो महाकालश्चेति ॥ ज्योतिष्काणां तु बहवः सूर्याश्चन्द्रमसश्च ॥ वैमानिकानामेकैक एव। तद्यथा। सौधर्मे शक्रः। ऐशान ईशानः।

* C वर्ज्जा। † D वेणुदाली। ‡ C जलप्रभवश्च।
§ D अमितगतिः। ‖ D गान्धर्वानां। ¶ D माणिभद्रश्च
** D अभिरूपश्च।

सनत्कुमारे सनत्कुमार इति । एवं सर्वकल्पेषु स्वकल्पाह्वाः* । परतस्त्विन्द्रादयो दश विशेषा न सन्ति । सर्व एव स्वतन्त्रा इति ॥

## पीतान्तलेश्याः ॥ ७ ॥

पूर्वयोर्निकाययोर्देवानां पीतान्ताश्चतस्रो लेश्या भवन्ति ॥

5 ## कायप्रवीचारा आ ऐशानात्[†] ॥ ८ ॥

भवनवास्यादयो देवा आ ऐशानात्कायप्रवीचारा भवन्ति । कायेन प्रवीचार एषामिति कायप्रवीचाराः । प्रवीचारो नाम मैथुनविषयोपसेवनम् । ते हि संक्लिष्टकर्माणो मनुष्यवन्मैथुन-सुखमनुप्रलीयमानास्तीव्रानुशयाः कायसंक्लेशजं सर्वाङ्गीणं स्पर्श-
10 सुखमवाप्य प्रीतिमुपलभन्त इति ॥

## शेषाः स्पर्शरूपशब्दमनःप्रवीचारा द्वयोर्द्वयोः ॥ ९ ॥

ऐशानादूर्ध्वं शेषाः कल्पोपपन्ना देवा द्वयोर्द्वयोः कल्पयोः स्पर्शरूपशब्दमनःप्रवीचारा भवन्ति यथासङ्ख्यम् । तद्यथा । सनत्कुमारमाहेन्द्रयोर्देवान्मैथुनसुखप्रेप्सूनुत्पन्नास्था‡न्विदित्वा देव्य
15 उपतिष्ठन्ते । ताः स्पृष्ट्वैव च ते प्रीतिमुपलभन्ते विनिवृत्तास्थाश्च भवन्ति ॥ तथा ब्रह्मलोकलान्तकयोर्देवानेवंभूतोत्पन्नास्थान्विदित्वा देव्यो दिव्यानि स्वभावभास्वराणि सर्वाङ्गमनोहराणि शृङ्गारोदाराभिजाताकारविलासान्युज्ज्वलचारुवेषाभरणानि स्वानि

---

* C स्वकल्पांकाकाः । † D ईशानात् । ‡ D एवभूतानेवोत्पन्नास्थान ।

रूपाणि दर्शयन्ति । तानि दृष्ट्वैव ते प्रीतिमुपलभन्ते निवृत्ता-
श्चाश्च भवन्ति ॥ तथा महाशुक्रसहस्रारयोर्देवानुत्पन्नप्रवीचारा-
श्चान्विदित्वा देव्यः श्रुतिविषयसुखानत्यन्तमनोहरान् शृङ्गारो-
दाराभिजातविलासाभिलाप*च्छेद†तलतालाभरणरवमिश्रान्हसि-
तकथितगीतशब्दानुदीरयन्ति । तान्श्रुत्वैव ते प्रीतिमुपलभन्ते 5
निवृत्ताश्चाश्च भवन्ति ॥ आनतप्राणतारणाच्युतकल्पवासिनो
देवाः प्रवीचारायोत्पन्नास्था देवीः संकल्पयन्ति संकल्पमात्रेणैव
ते परां प्रीतिमुपलभन्ते विनिवृत्ताश्चाश्च भवन्ति ॥ एभिश्च
प्रवीचारैः परतः परतः प्रीतिप्रकर्षविशेषो ऽनुपमगुणो भवति
प्रवीचारिणामल्पसंक्लेशत्वात् । स्थितिप्रभावादिभिरधिका इति 10
वक्ष्यते [IV. 21 ।] ॥

## परे ऽप्रवीचाराः ॥ १० ॥

कल्पोपपन्नेभ्यः परे देवा अप्रवीचारा भवन्ति । अल्पसंक्लेश-
त्वात् स्वस्थाः शीतीभूताः‡ । पञ्चविधप्रवीचारोद्भवादपि प्रीति-
विशेषादपरिमितगुणप्रीतिप्रकर्षाः परमसुखतृप्ता एव भवन्ति ॥ 15

अत्राह । उक्तं भवता देवाश्चतुर्निकाया दशाष्टपञ्चद्वादश-
विकल्पा इत्युक्ते निकायाः के के चैषां§ विकल्पा इति । अत्रो-
च्यते । चत्वारो देवनिकायाः । तद्यथा । भवनवासिनो व्यन्तरा
ज्योतिष्का वैमानिका इति ॥ तत्र

---

* K चभिलाप । † छेक ? ‡ C शीतभूताः ।

§ D इति तत्के निकायाः के चैषां ।

**भवनवासिनोऽसुरनागविद्युत्सुपर्णाग्निवातस्तनितोदधिद्वीपदिक्कुमाराः॥ ११॥**

प्रथमो देवनिकायो भवनवासिनः। इमानि चैषां विधानानि भवन्ति। तद्यथा। असुरकुमारा नागकुमारा विद्युत्कुमाराः
5 सुपर्णकुमारा अग्निकुमारा वातकुमाराः स्तनितकुमारा उदधिकुमारा द्वीपकुमारा दिक्कुमारा इति। कुमारवदेते कान्तदर्शनाः सुकुमारा* मृदुमधुरललितगतयः शृङ्गाराभिजातरूपविक्रियाः कुमारवच्चोद्धतरूपवेषभाषाभरणप्रहरणावरणयानं†-वाहनाः कुमारवच्चोल्बणरागाः क्रीडनपराश्चेत्यतः कुमारा
10 इत्युच्यन्ते। असुरकुमारावासेष्वसुरकुमाराः प्रतिवसन्ति शेषास्तु भवनेषु। महामन्दरस्य दक्षिणोत्तरयोर्दिग्विभागयोर्बह्वीषु योजनशतसहस्रकोटीकोटीष्वावासा भवनानि च दक्षिणार्धाधिपतीनामुत्तरार्धाधिपतीनां च यथास्वं भवन्ति। तत्र भवनानि रत्नप्रभायां बाहल्यार्धमवगाह्य मध्ये भवन्ति। भवनेषु
15 वसन्तीति भवनवासिनः॥

भवप्रत्ययाश्चैषामिमा नामकर्मनियमात्स्वजातिविशेषनियता विक्रिया भवन्ति। तद्यथा। गम्भीराः श्रीमन्तः काला महाकाया रत्नोत्कटमुकुटभास्वराश्चूडामणिचिह्ना **असुरकुमारा** भवन्ति। शिरोमुखेष्वधिकप्रतिरूपाः कृष्णश्यामा मृदुललित-
20 गतयः शिरस्सु फणिचिह्ना **नागकुमाराः**। स्निग्धा भ्राजिष्णवोऽवदाता वज्रचिह्ना **विद्युत्कुमाराः**। अधिक-

---

* D सुकुमारमृदु०। † C यान।

रूप*ग्रीवोरस्काः श्यामावदाता गरुडचिह्नाः **सुपर्णकुमाराः**। मानोन्मानप्रमाणयुक्ता भास्वन्तो ऽवदाता घटचिह्ना **अग्निकुमारा** भवन्ति। स्थिरपीनवृत्तगात्रा निमग्नोदरा अश्वचिह्ना अवदाता **वातकुमाराः**। स्निग्धाः स्निग्धगम्भीरानुनाद†महास्वनाः‡ कृष्णा वर्धमानचिह्नाः **स्तनितकुमाराः**। ऊरुकटिष्वधिकप्रतिरूपाः कृष्णश्यामा मकरचिह्ना **उदधिकुमाराः**। उरःस्कन्ध§बाह्वग्रहस्तेष्वधिकप्रतिरूपाः श्यामावदाताः सिंहचिह्ना **द्वीपकुमाराः**। जङ्घाग्रपादेष्वधिकप्रतिरूपाः श्यामा हस्तिचिह्ना **दिक्कुमाराः**। सर्वे विविधवस्त्राभरणप्रहरणावरणा भवन्तीति|| ॥

**व्यन्तराः किन्नरकिम्पुरुषमहोरगगान्धर्वयक्षराक्षसभूतपिशाचाः ॥ १२ ॥**

अष्टविधो द्वितीयो देवनिकायः। एतानि चास्य विधानानि भवन्ति। [1]अधस्तिर्यगूर्ध्वं च त्रिष्वपि लोकेषु भवननगरेष्वावासेषु च प्रतिवसन्ति¶। यस्माच्चाधस्तिर्यगूर्ध्वं च त्रीनपि लोकान् स्पृशन्तः स्वातन्त्र्यात्पराभियोगाच्च प्रायेण प्रतिपतन्त्यनियतगतिप्रचारा मनुष्यानपि केचिद्भृत्यवदुपचरन्ति विविधेषु

* D प्रतिरूप। † D स्वनुनादि। ‡ D महास्वराः। § D उदरस्कन्ध०।
|| C has सर्वे ऽपि च विविधवस्त्राभरणा भवन्ति। ¶ B प्रविशन्ति।

१ D adds अस्य रत्नप्रभायाः प्रथमस्य रत्नकाण्डस्य योजनसहस्रावगाढस्योर्ध्वमधश्चैकैकं योजनशतं वर्जयित्वा मध्ये ऽसङ्ख्येयानि भौमेयनगरावासशतसहस्राणि भवन्ति॥ तथा

च शैलकन्दरान्तर*वनविवरादिषु प्रतिवसन्त्यतो व्यन्तरा इत्युच्यन्ते ॥

तत्र **किन्नरा दशविधाः** । तद्यथा । किन्नराः किम्पुरुषाः किंपुरुषोत्तमाः† किन्नरोत्तमा हृदयंगमा रूपशालिनो ऽनिन्दिता मनोरमा रतिप्रिया रतिश्रेष्ठा इति ॥ **किम्पुरुषा दशविधाः** । 5 तद्यथा । पुरुषाः सत्पुरुषा महापुरुषाः पुरुषवृषभाः पुरुषोत्तमा अतिपुरुषा‡ मरुदेवा मरुतो मेरुप्रभा§ यशस्वन्त इति ॥ **महोरगा दशविधाः** । तद्यथा । भुजगा भोगशालिनो महाकाया अतिकायाः स्कन्धशालिनो मनोरमा महावेगा महेष्वक्षा|| मेरुकान्ता भास्वन्त¶ इति ॥ **गान्धर्वा द्वादशविधाः** । तद्यथा** । 10 हाहा हूहू तुम्बुरवो नारदा ऋषिवादिका†† भूतवादिकाः कादम्बा महाकादम्बा रैवता विश्वावसवो‡‡ गीतरतयो गीतयशस इति ॥ **यक्षास्त्रयोदशविधाः** । तद्यथा । पूर्णभद्रा माणिभद्राः श्वेतभद्रा हरिभद्राः सुमनोभद्रा व्यतिपातिकभद्राः सुभद्राः§§ सर्वतोभद्रा मनुष्ययक्षा वनाधिपतयो||||वनाहारा¶¶ रूपयक्षा यक्षोत्तमा इति ॥ 15 **सप्तविधा राक्षसाः** । तद्यथा** । भीमा महाभीमा विघ्ना विनायका जलराक्षसा राक्षसराक्षसा ब्रह्मराक्षसा इति ॥ **भूता नवविधाः** । तद्यथा** । सुरूपाः प्रतिरूपा अतिरूपा भूतोत्तमा

---

* D कन्दरातवन । † B D किन्नरकिम्पुरुषाः । ‡ C अतिपुरुषोत्तमाः ।

§ D मरुत्प्रभाः । || K महेष्वक्षा, D महेष्वकाः ।

¶ D भास्वान्तः । ** Mss. omit †† D रिविवादिकाः ।

‡‡ D विश्वावसव । §§ D स्वभद्राः । |||| D धनाधिपतयः ।

¶¶ D धनाहाराः ।

स्कन्दिका महास्कन्दिका महावेगाः प्रतिच्छन्ना आकाशगा इति ॥ **पिशाचाः पञ्चदशविधाः** । तद्यथा । कूष्माण्डाः पटका* जोषा आह्नकाः† काला महाकालाश्चौचा‡ अचौचा-स्तालपिशाचा मुखरपिशाचा अधस्तारका देहा महाविदेहा§-स्तूष्णीका वनपिशाचा इति ॥ 5

तत्र **किन्नराः** प्रियङ्गुश्यामाः सौम्याः सौम्यदर्शना मुखेष्व-धिकरूपशोभा मुकुटमौलि||भूषणा अशोकवृक्षध्वजा अवदाताः ॥ **किम्पुरुषा** ऊरु¶बाहुष्वधिकशोभा मुखेष्वधिकभास्वरा विवि-धाभरणभूषणा**श्चित्रस्रगनुलेपनाश्चम्पकवृक्षध्वजाः ॥ **महोरगाः** श्यामावदाता महावेगाः सौम्याः सौम्यदर्शना महाकायाः पृथु- 10 पीनस्कन्धग्रीवा विविधानुविलेपना†† विचित्राभरण‡‡भूषणा नागवृक्षध्वजाः ॥ **गान्धर्वा** रक्तावदाता§§ गम्भीराः प्रियदर्शनाः सुरूपाः सुमुखाकाराः सुस्वरा मौलिधरा हारविभूषणास्तुम्बुरु|||-वृक्षध्वजाः ॥ **यक्षाः** श्यामावदाता गम्भीरा तुन्दिला वृन्दारकाः प्रियदर्शना मानोन्मानप्रमाणयुक्ता रक्तपाणिपादतलनखतालु- 15 जिह्वौष्ठा भास्वरमुकुटधरा¶¶ नानारत्नविभूषणा वटवृक्षध्वजाः ॥ **राक्षसा** अवदाता*** भीमा भीमदर्शनाः शिरःकराला रक्तलम्बौष्ठास्तपनीयविभूषणा नानाभक्तिविलेपनाः खट्वाङ्गध्व-

---

* B पिठकाः । † B जगकाः, K जडकाः, D जाह्नकाः ।

‡ K B सौचौचाः, D चोचाः । § K महादेहाः, C सदेहाः ।

|| D मूलि । ¶ D उरो । ** D॰ भूषणा विचित्र । †† D विविधविलेपनाः ।

‡‡ D जावरण । §§ K B and D place this before गान्धर्वाः ।

||| B तुम्बर । ¶¶ C ॰मुकुटधरा । *** K B place this before राक्षसाः

जाः ॥ **भूताः** श्यामाः[*] सुरूपाः सौम्या आपीवरा[†] नाना-भक्तिविलेपनाः सुलसध्वजाः कालाः ॥ **पिशाचाः** सुरूपाः सौम्यदर्शना हस्तग्रीवासु मणिरत्नविभूषणाः कदम्बवृक्षध्वजाः ॥ इत्येवंप्रकारस्वभावानि वैक्रियाणि रूपचिह्नानि व्यन्तराणां भवन्तीति ॥

तृतीयो देवनिकायः।

**ज्योतिष्काः सूर्याश्चन्द्रमसो ग्रह[‡]नक्षत्रप्रकीर्ण-तारकाश्च[§] ॥ १३ ॥**

ज्योतिष्काः पञ्चविधा भवन्ति। तद्यथा। सूर्याश्चन्द्रमसो ग्रहा नक्षत्राणि प्रकीर्णतारका इति पञ्चविधा ज्योतिष्का इति। असमासकरणमार्षाच्च[१] सूर्यच[||]न्द्रमसोः क्रमभेदः कृतः[¶]यथा गम्ये-तैतदेषामूर्ध्वनिवेश आनुपूर्व्यमिति। तद्यथा। सर्वाधस्तात्सूर्या-स्ततश्चन्द्रमसस्ततो[**]ग्रहास्ततो नक्षत्राणि ततोऽपि प्रकीर्णतारा:। ताराग्रहास्त्वनियतचारित्वात्सूर्यचन्द्रमसामूर्ध्वमधश्च चरन्ति सूर्येभ्यो दशयोजनावलम्बिनो भवन्तीति। समाद्भूमिभागादष्टसु योजन-शतेषु सूर्यास्ततो योजनानामशीत्यां चन्द्रमसस्ततो विंशत्यां तारा

[*] K B place this before भूताः।

[†] B omits K आपीनधरा. D आपीडधराः।

[‡] C ग्रहा नक्षत्राणि।　　[§] P K ताराश्च।　　[||] D सूर्याचन्द्रमसः।

[¶] K कृतः।　　[**] D ततस्तारा ग्रहाः।

[१] S असमासकरणे पारमर्षप्रवचनक्रमभेदे च प्रयोजनमाह। असमास-करणात्तावत्तिर्यङ्मण्डलिकयावस्थानं निषिध्यते। उपर्युपर्यवस्थानम्। × × × आर्षे तु प्राक्चन्द्रः पठ्यते पश्चात्सूर्य इति। न चैवमुपरि संनिवेशः ॥

इति। द्योतयन्त इति द्योतींषि विमानानि तेषु भवा ज्योतिष्का ज्योतिषो वा देवा ज्योतिरेव वा ज्योतिष्काः। मुकुटेषु शिरो-मुकुटोपगूहितैः* प्रभामण्डलकल्पैरुज्ज्वलैः सूर्यचन्द्रतारामण्डलै-र्यथास्वं चिह्नैर्विराजमाना द्युतिमन्तो ज्योतिष्का भवन्तीति ॥ 5

## मेरुप्रदक्षिणानित्यगतयो नृलोके ॥ १४ ॥

मानुषोत्तरपर्यन्तो मनुष्यलोक† इत्युक्तम् [III 14]। तस्मि-ञ्ज्योतिष्का मेरुप्रदक्षिणानित्यगतयो भ्रमन्ति‡। मेरोः प्रदक्षिणा नित्या गतिरेषामिति मेरुप्रदक्षिणानित्यगतयः। एकादशस्वेक-विंशेषु योजनशतेषु मेरोश्चतुर्दिशं प्रदक्षिणं चरन्ति। तत्र द्वौ 10 सूर्यौ जम्बूद्वीपे लवणजले चत्वारो धातकीखण्डे द्वादश कालोदे द्वाचत्वारिंशत्पुष्करार्धे द्विसप्ततिरित्येवं मनुष्यलोके द्वात्रिंशत्सूर्य-शतं§ भवति। चन्द्रमसामप्येष एव विधिः। अष्टाविंशतिर्नक्ष-त्राणि अष्टाशीतिर्ग्रहाः षट्षष्टिः सहस्राणि नव शतानि पञ्च-सप्ततानि तारा||कोटाकोटीनामेकैकस्य चन्द्रमसः परिग्रहः। 15 सूर्याश्चन्द्रमसो ग्रहा नक्षत्राणि च तिर्यग्लोके शेषास्तूर्ध्वलोके[१] ज्योतिष्का भवन्ति। अष्टचत्वारिंशद्योजनैकषष्टिभागाः सूर्य-

---

* D शिरोमुकुटोपगूहितैः। † D मानुषोत्तरपर्यन्ते मनुष्यलोके इत्युक्तम्। ‡ D भवन्ति। § D द्वात्रिंशं सूर्यशतं। || D ताराकोटीकोटीनां। B तारका· कोटाकोटीनां।

---

१ S शेषास्तु प्रकीर्णतारका ऊर्ध्वलोके भवन्तीत्याचार्य एवेदमवगच्छति। तत्त्वार्थमेवमवस्थितं सर्वज्योतिष्काणां तिर्यग्लोकव्यवस्थानादिति। H शेषा-स्तूर्ध्वलोके ज्योतिष्काः तारालक्षणा इति वृत्तिकाराभिप्रायः तद्वाङ्मात्रत्वाद-विरुद्ध एव। अष्टादशयोजनशतोच्छ्रितत्वेऽपि तिर्यग्लोकस्याध ऊर्ध्व-दिग्भावो भयत्वविरोधात्॥

मण्डलविष्कम्भश्चन्द्रमसः षट्पञ्चाशद् ग्रहाणामर्धयोजनं गव्यूतं नक्षत्राणां सर्वोत्कृष्टायास्ताराया अर्धक्रोशो जघन्यायाः पञ्च-धनुःशतानि । विष्कम्भार्धबाहल्याश्च भवन्ति । सर्वे सूर्या-दयो नृलोक इति वर्तते । बहिस्तु विष्कम्भबाहल्याभ्यामतो ऽर्धं
5 भवन्ति ॥ एतानि च ज्योतिष्कविमानानि लोकस्थित्या प्रसक्ता-वस्थितगतीन्यपि ऋद्धि*विशेषार्थमाभियोग्यनामकर्मोदयाच्च नित्यं गतिरतयो देवा वहन्ति । तद्यथा । पुरस्तात्केसरिणो दक्षिणतः कुञ्जरा अपरतो वृषभा उत्तरतो जविनो ऽश्वा इति ॥

## तत्कृतः कालविभागः ॥ १५ ॥

10 कालो ऽनन्तसमयोव र्तनादिलक्षण इत्युक्तम् [V. 39 and 22]। तस्य विभागो ज्योतिष्काणां गतिविशेषकृतश्चारविशेषेण हेतुना । तैः कृतस्तत्कृतः । तद्यथा । अणुभागाश्चारा† अंशाः कला लवा नालिका मुहूर्ता दिवसरात्रयः‡ पक्षा मासा ऋतवो ऽयनानि संवत्सरा युगमिति लौकिकसमो विभागः ॥ पुनरन्यो विकल्पः
15 प्रत्युत्पन्नोऽतीतोऽनागत इति त्रिविधः ॥ पुनस्त्रिविधः परि-भाष्यते सङ्ख्येयोऽसङ्ख्येयोऽनन्त इति ॥

तत्र परमसूक्ष्मक्रियस्य सर्वजघन्यगतिपरिणतस्य परमाणोः स्वावगाहनक्षेत्रव्यतिक्रमकालः समय इत्युच्यते परमदुरधिगमो[१]

---

* C परिद्धि । † D चरा । ‡ D दिवसाः रात्रयः ।

---

१ S परमैः अतिशयसम्पन्नैः दुःखेनाधिगम्यते ॥

ऽनिर्देश्यः । तं हि भगवन्तः परमर्षयः केवलिनो विदन्ति न तु निर्दिशन्ति परमनिरुद्धत्वात् । परमनिरुद्धे हि तस्मिन् भाषाद्रव्याणां ग्रहणनिसर्गयोः करणप्रयोगासम्भव इति । ते त्वसङ्ख्येया आवलिका । ताः सङ्ख्येया उच्छ्वासस्तथा निःश्वासः । तौ बलवतः पट्विन्द्रियस्य कल्यस्य मध्यमवयसः स्वस्थमनसः पुंसः प्राणः । ते सप्त स्तोकः । ते सप्त लवः । ते ऽष्टात्रिंशदर्धं च नालिका । ते द्वे मुहूर्तः । ते त्रिंशदहोरात्रम् । तानि पञ्चदश पक्षः । तौ द्वौ शुक्लकृष्णौ मासः । तौ द्वौ मासावृतुः । ते त्रयो ऽयनम् । ते द्वे संवत्सरः । ते पञ्च चन्द्रचन्द्राभिवर्धितचन्द्राभिवर्धिता*ख्या युगम् । तन्मध्ये ऽन्ते चाधिकमासकौ । सूर्यसवनचन्द्रनक्षत्राभिवर्धितानि युगनामानि† । वर्षशतसहस्रं चतुरशीतिगुणितं पूर्वाङ्गम् । पूर्वाङ्गशतसहस्रं चतुरशीतिगुणितं पूर्वम्‡ । एवं ता§न्ययुतकमलनलिनकुमुदतुट्यटटाववा‖हाहाहू¶हूचतुरशीतिशतसहस्रगुणाः सङ्ख्येयः कालः । अत ऊर्ध्वमुपमानियतं वक्ष्यामः । तद्यथा हि नाम योजनविस्तीर्णं योजनोच्छ्रायं वृत्तं पल्यमेकरात्राद्युत्कृष्टसप्तरात्रजातानामङ्गलोम्नां गाढं** पूर्णं स्याद्वर्षशताद्वर्षशतादेकैकस्मिन्नुद्ध्रियमाणे यावता

* C adds चन्द्र । D omits ख्या ।

† B D add विंशतियुगैर्वर्षशत दशभिर्वर्षशतैर्वर्षसहस्र वर्षसहस्रं शतगुणं वर्षशतसहस्रं ।

‡ D पूर्वाङ्गं चतुरशीतिशतसहस्रगुणितं पूर्वं ।

§ C omits तानि । ‖ K अडड and अवव, B अपपा । ¶ D हूहूकाचतु ।

** D गाढपर्ण ।

कालेन तद्भिन्नं स्यादेतत्पल्योपमम् । तद्दशभिः कोटाकोटि-
भिर्गुणितं सागरोपमम् । तेषां कोटाकोट्यश्चतस्रः सुषमसुषमा* ।
तिस्रः सुषमा । द्वे सुषमदुःषमा । द्विचत्वारिंशद्वर्षसहस्राणि
हित्वा एका दुःषमसुषमा । वर्षसहस्राणि एकविंशतिर्दुःषमा ।
5 तावत्येव दुःषमदुःषमा । ता अनुलोमप्रतिलोमा अवसर्पिण्यु-
त्सर्पिण्यौ भरतैरावतेष्वनाद्यनन्तं परिवर्तते ऽहोरात्रवत् । तयोः
शरीरायुःशुभपरिणामानामनन्तगुणहानिवृद्धी अशुभपरिणा-
मवृद्धिहानी† । अवस्थितावस्थितगुणा‡श्चैकैकान्यत्र । तद्यथा ।
कुरुषु सुषमसुषमा हरिरम्यकवासेषु सुषमा हैमवतहैरण्यवतेषु
10 सुषमदुःषमा§ विदेहेषु सान्तरद्वीपेषु दुःषमसुषमा इत्येव-
मादिर्मनुष्यक्षेत्रे पर्यायः कालविभागो ज्ञेय इति ॥

## बहिरवस्थिताः ॥ १६ ॥

नृलोकाद्बहिर्ज्योतिष्का अवस्थिताः । अवस्थिता इत्यविचा-
रिणो ऽवस्थितविमानप्रदेशा अवस्थितलेश्याप्रकाशा इत्यर्थः ।
15 सुखशीतोष्णरश्मयश्चेति ॥

## वैमानिकाः ॥ १७ ॥

चतुर्थो देवनिकायो वैमानिकाः । ते ऽत ऊर्ध्वं वक्ष्यन्ते । वि-
मानेषु भवा वैमानिकाः ॥

## कल्पोपपन्नाः कल्पातीताश्च ॥ १८ ॥

---

* D has plural in all these in this connection.

† B अशुभानाम् वृद्धिहानी । ‡ B गुणाश्चैकैकान्यत्र ।

§ K सुषमदुःषमानुभावो ।

द्विविधा वैमानिका देवाः कल्पोपपन्नाः कल्पातीताश्च । तान् परस्तादक्ष्याम इति ॥

## उपर्युपरि ॥ १९ ॥

उपर्युपरि च यथानिर्देशं वेदितव्याः । नैकक्षेत्रे नापि तिर्यगधो वेति ॥ 5

## सौधर्मैशानसनत्कुमारमाहेन्द्रब्रह्मलोकलान्तक-महाशुक्रसहस्रारेष्वानतप्राणतयोरारणाच्युतयोर्नवसु ग्रैवेयेषु विजयवैजयन्तजयन्तापराजितेषु सर्वार्थसिद्धे च ॥ २० ॥

एतेषु सौधर्मादिषु कल्पविमानेषु वैमानिका देवा भवन्ति। 10 तद्यथा । सौधर्मस्य कल्पस्योपर्यैशानः कल्पः । ऐशानस्योपरि सनत्कुमारः । सनत्कुमारस्योपरि माहेन्द्र इत्येवमासर्वार्थसिद्धा-दिति ॥ सुधर्मा नाम* शक्रस्य† देवेन्द्रस्य सभा । सा तस्मिन्न-स्तीति सौधर्मः कल्पः । ईशानस्य देवराजस्य निवास ऐशान इत्येवमिन्द्राणां निवासयोग्या‡भिख्याः सर्वे कल्पाः ॥ ग्रैवेयास्तु 15 लोकपुरुषस्य ग्रीवाप्रदेशविनिविष्टा ग्रीवाभरणभूता ग्रैवा§ ग्रीव्या§ ग्रैवेया ग्रैवेयका इति ॥ अनुत्तराः पञ्च देवनामान एव । विजिता अभ्युदयविघ्नहेतव एभिरिति विजयवैजयन्तज-यन्ताः । तैरेव विघ्नहेतुभिर्न पराजिता अपराजिताः। सर्वेष्व-भ्युदयार्थेषु सिद्धाः सर्वार्थैश्च सिद्धाः सर्वे चैषामभ्युदयार्थाः 20

---

* D सुधर्मनामा। † C om. ‡ D योगाभिख्याः। § C interchange

सिद्धा इति सर्वार्थसिद्धाः । विजितप्रायाणि वा कर्माण्येभिरु-
पस्थितभद्राः परीषहैरपराजिताः सर्वार्थेषु सिद्धाः सिद्धप्रायो-
त्तमार्था इति विजयादय इति ॥

**स्थितिप्रभावसुखद्युतिलेश्याविशुद्धीन्द्रियावधिवि-**
5 **षयतो ऽधिकाः ॥ २१ ॥**

यथाक्रमं चैतेषु सौधर्मादिषूपर्युपरि देवाः पूर्वतः पूर्वत
एभिः स्थित्यादिभिरर्थैरधिका भवन्ति ॥ तत्र **स्थिति**रुत्कृष्टा
जघन्या च परस्तादवक्ष्यते । इह तु वचने प्रयोजनं येषामपि
समा भवति तेषामप्युपर्युपरि गुणा*धिका भवतीति
10 यथा प्रतीयेत† ॥ **प्रभावतो** ऽधिकाः । यः प्रभावो निग्रहानु-
ग्रहविक्रियापराभियोगादिषु सौधर्मकाणां सो ऽनन्तगुणाधिक
उपर्युपरि । मन्दाभिमानतया त्वल्पतरसंक्लिष्टत्वादेते‡ न प्रव-
र्तन्त इति ॥ क्षेत्रस्वभावजनिताच्च शुभपुद्गलपरिणामात्**सुखतो**
**द्युति**तश्चानन्तगुणप्रकर्षेणाधिकाः ॥ **लेश्याविशुद्ध्या**धिकाः ।
15 लेश्यानियमः§ परस्तादेषां वक्ष्यते । इह तु वचने प्रयोजनं‖
यथा गम्येत यत्रापि विधानतस्तुल्यास्तत्रापि विशुद्धितो ऽधिका
भवन्तीति। कर्मविशुद्धित एव वाधिका भवन्तीति॥ **इन्द्रिय-**
**विषयतो** ऽधिकाः । यदिन्द्रियपाटवं दूरादिष्टविषयोपलब्धौ
सौधर्मदेवानां तत्प्रकृष्टतरगुणत्वादल्पतरसंक्लेशत्वाच्चाधिकमुपर्यु-

* C गुणतो ऽधिका ।　　† D प्रतीयेत ।　　‡ D त्वाच्च ।

§ C नियमं वक्ष्यति । IV 23　　‖ Some Mss. omit प्रयोजनं ।

परीति॥ **अवधिविषयतो** ऽधिकाः सौधर्मैशानयोर्देवा अवधि-विषयेणाधो रत्नप्रभां पश्यन्ति तिर्यगसङ्ख्येयानि योजन*सह-स्त्राण्यूर्ध्वमास्वभवनात् । सनत्कुमारमाहेन्द्रयोः शर्कराप्रभां पश्यन्ति तिर्यगसङ्ख्येयानि योजनशतसहस्त्राण्यूर्ध्वमास्वभवनात् । इत्येवं शेषाः क्रमशः । अनुत्तरविमानवासिनस्तु कृत्स्नां लोक- 5 नाडीं† पश्यन्ति। येषामपि क्षेत्रतस्तुल्यो ऽवधिविषयः तेषाम-प्युपर्युपरि विशुद्धितो ऽधिको भवतीति‡ ॥

## गतिशरीरपरिग्रहाभिमानतो हीनाः ॥ २२ ॥

गतिविषयेण शरीरमहत्त्वेन महापरिग्रहत्वेनाभिमानेन चोपर्युपरि हीनाः । तद्यथा । द्विसागरोपमजघन्यस्थितीनां 10 देवानामासप्तम्यां **गतिविषय**स्तिर्यगसङ्ख्येयानि योजनकोटीको-टीसहस्राणि ततः परतो जघन्यस्थितीनामेकैकहीना भूमयो यावत्तृतीयेति । गतपूर्वास्तु§ गमिष्यन्ति च तृतीयां|| देवाः परतस्तु सत्यपि गतिविषये न गतपूर्वा नापि गमिष्यन्ति । महानुभावक्रियातः औदासीन्याच्चोपर्युपरि देवा न गतिरतयो 15 भवन्ति॥ सौधर्मैशानयो कल्पयोर्देवानां **शरीरोच्छ्रायः** सप्त-रत्नयः । उपर्युपरि द्वयोर्द्वयोरेकारत्निर्हीना आसहस्रारात् । आनतादिषु तिस्रः । ग्रैवेयकेषु द्वे । अनुत्तरे ¶एका इति ॥ सौधर्मे विमानानां द्वात्रिंशच्छतसहस्राणि । ऐशाने ऽष्टाविंशतिः ।

---

* C has शतसहस्र । † D लोकनाडी । ‡ C पं १००० ।
§ B गतिपूर्वास्तु । || C D तृतीयायां । ¶ B अनुत्तरेष्वेका ।

सनत्कुमारे द्वादश । माहेन्द्रे ऽष्टौ । ब्रह्मलोके चत्वारि शतस-
हस्राणि । लान्तके पञ्चाशत्सहस्राणि । महाशुक्रे चत्वारिंशत् ।
सहस्रारे षट् । आनतप्राणतारणाच्युतेषु* सप्त शतानि । अधो
5 ग्रैवेयकाणां† शतमेकादशोत्तरम् । मध्ये सप्तोत्तरम् । उपर्येक-
मेव शतम् । अनुत्तराः पञ्चैवेति । एवमूर्ध्वलोके वैमानिकानां
सर्वविमानपरिसङ्ख्या चतुरशीतिः शतसहस्राणि सप्तनवतिश्च
सहस्राणि त्रयोविंशानीति ॥ स्थानपरिवारशक्तिविषयसंपत्स्थि-
तिष्वल्पाभिमानाः परमसुखभागिन उपर्युपरीति ॥

10 **उच्छ्वासाहारवेदनोपपातानुभावतश्च साध्याः**[1] ॥

**उच्छ्वासः** सर्वजघन्यस्थितीनां देवानां सप्तसु‡ स्तोकेषु **आहार**
श्चतुर्थकालः । पल्योपमस्थितीनामन्तर्दिवसस्योच्छ्वासो दिवस-
पृथक्त्वस्याहारः । यस्य यावन्ति सागरोपमाणि स्थितिस्तस्य ताव-
त्स्वर्धमासेषूच्छ्वासस्तावत्स्वेव वर्षसहस्रेष्वाहारः ॥ देवानां **सद्वेदनाः**
15 प्रायेण भवन्ति न कदाचिदसद्वेदनाः । यदि चासद्वेदना|| भवन्ति
ततो ऽन्तर्मुहूर्तमेव भवन्ति न परतो ऽनुबद्धाः सद्वेदनास्तू-
त्कृष्टेन षण्मासान् भवन्ति ॥ **उपपातः** । आरणाच्युतादूर्ध्वमन्य-
तीर्था§नामुपपातो न भवति । स्वलिङ्गिनां भिन्नदर्शनानामा-

---

* B and C omit आरण ।   † B ग्रैवेयाणां ।

‡ Probably considers this to be a sūtra   C सप्तस्तोका ।

§ K D अन्यतीर्थिकानाम् ।   || S सदासद्वेदना० ।

---

१ S सूत्रेणानुपात्तमुपर्युपरिहीनमुच्छ्वासाद्युपन्यस्यति भाष्यकारः ॥

Some Mss give this as a separate sūtra.

X रा. ब. की प्रति में पृथक् सूत्र दिया है ।

ग्रैवेयकेभ्य उपपातः। अन्यस्य सम्यग्दृष्टेः संयतस्य भजनीयं आसर्वार्थसिद्धात्। ब्रह्मलोकादूर्ध्वमासर्वार्थसिद्धाच्चतुर्दशपूर्वधराणामिति ॥ **अनुभावो** विमानानां सिद्धि*क्षेत्रस्य चाकाशे निरालम्बस्थितौ लोकस्थितिरेव हेतुः। लोकस्थितिर्लोकानुभावो लोकस्वभावो जगद्धर्मो ऽनादिपरिणामसन्ततिरित्यर्थः†। 5
सर्वे च देवेन्द्रा ग्रैवेयादिषु च देवा भगवतां परमर्षीणामर्हतां जन्माभिषेकनिःक्रमणज्ञानोत्पत्तिमहासमवसरणनिर्वाणकालेष्वासीनाः शयिताः स्थिता वा ‡सहसैवासनशयनस्थानाश्रयैः प्रचलन्ति। शुभकर्मफलोदयाल्लोकानुभावत एव वा। ततो जनितोपयोगास्तां भगवतामनन्यसदृशीं तीर्थकरनामकर्मोद्भवां 10
धर्मविभूतिमवधिनालोच्य§ संजातसंवेगाः सद्धर्मबहुमाना‖ः केचिदागत्य भगवत्पादमूलं स्तुतिवन्दनोपासनहितश्रवणैरात्मानुग्रहमाप्नुवन्ति¶। केचिदपि तत्रस्था एव प्रत्युपस्थापनाञ्जलि**प्रणिपातनमस्कारोपहारैः ††परमसंविग्नाः सद्धर्मानुरागोत्फुल्लनयनवदनाः समभ्यर्चयन्ति ॥ 15

अत्राह। त्रयाणां देवनिकायानां लेश्यानियमो ऽभिहितः। अथ वैमानिकानां केषां का लेश्या इति। अत्रोच्यते ॥

## पीतपद्मशुक्ललेश्या द्वित्रिशेषेषु ॥ २३ ॥

उपर्युपरि वैमानिकाः सौधर्मादिषु द्वयोस्त्रिषु शेषेषु च

---

* B C सिद्धक्षेत्रस्य। † D अनादिपरिणामः सन्ततिरित्यर्थः। ‡ C सहस्र व।
§ C आलोक्य। ‖ C सद्धर्मबहुमानाः। ¶ D अवाप्नुवन्ति।
** D प्रत्युत्थानाञ्जलि। †† B adds परम।

पीतपद्मशुक्ललेश्या भवन्ति यथासङ्ख्यम् । द्वयोः पीतलेश्याः सौधर्मैशानयोः* । त्रिषु पद्मलेश्याः सनत्कुमारमाहेन्द्रब्रह्मलोकेषु । शेषेषु लान्तकादिष्वासर्वार्थसिद्धाच्छुक्ललेश्याः । उपर्युपरि तु विशुद्धतरेत्युक्तम्[१] ॥

5 अत्राह । उक्तं भवता द्विविधा वैमानिका देवाः कल्पोपपन्नाः कल्पातीताश्चेति । तत्[†] के कल्पा इति अत्रोच्यते ॥

## प्राग्ग्रैवेयकेभ्यः कल्पाः ॥ २४ ॥

प्राग्ग्रैवेयकेभ्यः कल्पा भवन्ति सौधर्मादय आरणाच्युतपर्यन्ता इत्यर्थः । अतो ऽन्ये कल्पातीताः ॥

10 अत्राह । किं देवाः सर्वे एव सम्यग्दृष्टयो यद्भगवतां परमर्षीणामर्हतां जन्मादिषु प्रमुदिता भवन्ति इति । अत्रोच्यते । न सर्वे सम्यग्दृष्टयः किं तु सम्यग्दृष्टयः सद्धर्मबहुमानादेव[‡] तत्र प्रमुदिता भवन्त्यभिगच्छन्ति च । मिथ्यादृष्टयो ऽपि च

---

* KD पीतलेश्याः सौधर्मैशानयोः । † C तत्र ।
‡ B सद्धर्मबहुमाना देवा ।

---

१ मलयगिरि in his commentary on बृहत्संग्रहणी by जिनभद्रगणि-क्षमाश्रमण says :—आह च तत्त्वार्थटीकाकारो हरिभद्रसूरिः । भावलेश्याः षडपीष्यन्ते देवानां प्रतिनिकायमिति ॥ The same author in his commentary on प्रज्ञापनासूत्र (Calcutta Edition, p. 365 A), says.— यथा च प्रमाणाबाधितत्वं तथा तत्त्वार्थटीकायां भावितमिति ततो ऽवधार्यं । From this it is clear that मलयगिरि also composed a commentary on तत्त्वार्थ ।

लोकचित्तानुरोधादिन्द्रानुवृत्त्या परस्परदर्शनात् पूर्वानुचरित-मिति च प्रमोदं भजन्ते ऽभिगच्छन्ति च । लोकान्तिकास्तु सर्वे एव विशुद्धभावाः सद्धर्मबहुमानात्संसारदुःखार्त्तानां च सत्त्वानामनुकम्पया भगवतां परमर्षीणामर्हतां जन्मादिषु विशेषतः प्रमुदिता भवन्ति । अभिनिःक्रमणाय* च कृतसंकल्पा- 5 न्भगवतो ऽभिगम्य प्रहृष्टमनसः स्तुवन्ति सभाजयन्ति चेति ॥

अत्राह । के† पुनर्लोकान्तिकाः कतिविधा वेति । अत्रोच्यते

## ब्रह्मलोकालया लोकान्तिकाः‡ ॥ २५ ॥

ब्रह्मलोकालया एव लोकान्तिका भवन्ति नान्यकल्पेषु नापि परतः । ब्रह्मलोकं परिवृत्त्याष्टासु दिक्षु अष्टविकल्पा 10 भवन्ति । तद्यथा ।

## सारस्वतादित्यवह्न्यरुणगर्दतोयतुषिताव्याबाधम-रुतः§ (अरिष्टाश्च) ॥ २६ ॥

एते सारस्वतादयो ऽष्टविधा देवा ब्रह्मलोकस्य पूर्वोत्तरा-दिषु दिक्षु प्रदक्षिणं भवन्ति यथासङ्ख्यम् । तद्यथा । पूर्वोत्तरस्यां 15 दिशि सारस्वताः पूर्वस्यामादित्या इत्येवं शेषाः ॥

---

* D अभिनिःक्रमणे । † D क । 
‡ D here and elsewhere लोकान्तिकाः ।
§ C ०ताव्याबाधारिष्टमरुतः ।

## विजयादिषु द्विचरमाः ॥ २७ ॥

विजयादिष्वनुत्तरेषु विमानेषु देवा द्विचरमा भवन्ति । द्विचरमा इति ततश्च्युताः परं द्विर्जनित्वा सिध्यन्तीति । सकृत्सर्वार्थसिद्धमहाविमानवासिनः* । शेषास्तु भजनीयाः ॥

5 अत्राह । उक्तं भवता जीवस्यौदयिकेषु भावेषु तिर्यग्योनि-गतिरिति [ II. 6] तथा स्थितौ तिर्यग्योनीनां चेति [ III 126 ] । आस्रवेषु च माया तैर्यग्योनस्येति [ VI 17 ] । तत्के तिर्यग्योनय इति । अत्रोच्यते

## औपपातिकमनुष्येभ्यः शेषास्तिर्यग्योनयः ॥ २८ ॥

10 औपपातिकेभ्यश्च नारकदेवेभ्यो मनुष्येभ्यश्च यथोक्तेभ्यः शेषा एकेन्द्रियादयस्तिर्यग्योनयो भवन्ति ॥

अत्राह । †तिर्यग्योनिमनुष्याणां स्थितिरुक्ता । अथ देवानां का स्थितिरिति । अत्रोच्यते

## स्थितिः ॥ २९ ॥

15 स्थितिरित्यत ऊर्ध्वं वक्ष्यते ॥

## भवनेषु दक्षिणार्धाधिपतीनां पल्योपममध्यर्धम् ॥३०॥

भवनेषु तावद्भवनवासिनां दक्षिणार्धाधिपतीनां पल्योपम-

---

* D omits. † D adds नारक ।

मध्यर्धं परा स्थितिः। द्वयोर्द्वयोर्यथोक्तयोर्भवनवासीन्द्रयोः पूर्वो*
दक्षिणार्धाधिपतिः पर उत्तरार्धाधिपतिः॥

## शेषाणां पादोने ॥ ३१ ॥

शेषाणां† भवनवासिष्वधिपतीनां द्वे पल्योपमे पादोने परा
स्थितिः। के च शेषा उत्तरार्धाधिपतय इति॥ 5

## असुरेन्द्रयोः सागरोपममधिकं च ॥ ३२ ॥

असुरेन्द्रयोस्तु दक्षिणार्धाधिपत्युत्तरार्धाधिपत्योः सागरोप-
ममधिकं च यथासङ्ख्यं परा स्थितिर्भवति॥

## सौधर्मादिषु यथाक्रमम् ॥ ३३ ॥

सौधर्ममादिं कृत्वा यथाक्रममित ऊर्ध्वं परा स्थितिर्वक्ष्यते॥ 10

## सागरोपमे ॥ ३४ ॥

सौधर्मे कल्पे देवानां परा स्थितिर्द्वे सागरोपमे इति॥

## अधिके च ॥ ३५ ॥

ऐशाने द्वे एव सागरोपमे अधिके परा स्थितिर्भवति॥

## सप्त सनत्कुमारे ॥ ३६ ॥ 15

सनत्कुमारे कल्पे सप्त सागरोपमाणि परा स्थितिर्भवति॥

---

* B पूर्वयोः D ०पूर्वनिर्दिष्टो यः स दक्षिणार्धाधिपतिरपर उत्तराधिपतिरिति ;

† C omits.

## विशेषत्रिसप्तदशैकादशत्रयोदशपञ्चदशभिरधिकानि च ॥ ३७ ॥

एभिर्विशेषादिभिरधिकानि सप्त माहेन्द्रादिषु परा स्थितिर्भवति। सप्तेति वर्तते। तद्यथा। माहेन्द्रे सप्त विशेषाधिकानि। ब्रह्मलोके त्रिभिरधिकानि सप्त दशेत्यर्थः। लान्तके सप्तभिरधिकानि सप्त चतुर्दशेत्यर्थः। महाशुक्रे दशभिरधिकानि सप्त सप्तदशेत्यर्थः। सहस्रारे एकादशभिरधिकानि सप्त अष्टादशेत्यर्थः। आनतप्राणतयोस्त्रयोदशभिरधिकानि सप्त विंशतिरित्यर्थः। *आरणाच्युतयोः पञ्चदशभिरधिकानि सप्त द्वाविंशतिरित्यर्थः॥

## आरणा†च्युतादूर्ध्वमेकैकेन नवसु ग्रैवेयकेषु विजयादिषु सर्वार्थसिद्धे च[1] ॥ ३८ ॥

आरणाच्युतादूर्ध्वमेकैकेनाधिका स्थितिर्भवति नवसु ग्रैवेयकेषु विजयादिषु सर्वार्थसिद्धे च। आरणाच्युते द्वाविंशतिर्ग्रैवेयकेषु पृथगेकैकेनाधिका त्रयोविंशतिरित्यर्थः। एवमेकैकेनाधिका सर्वेषु नवसु यावत्सर्वेषामुपरि नवमे एकत्रिंशत्। सा

---

* ('आरणा०। † ('आरण।

---

१ II विजयादिष्विति तु द्व्यधिकसङ्ख्यानियमार्थः सर्वार्थसिद्ध इति चाजघन्योत्कृष्टसङ्ख्यानियमार्थः।

विजयादिषु चतुर्ष्वप्येकेनाधिका द्वात्रिंशत् । साप्येकेनाधिका सर्वार्थसिद्धे* त्रयस्त्रिंशदिति ॥

अत्राह । मनुष्यतिर्यग्योनिजानां परापरे स्थिती व्याख्याते । अथौपपातिकानां किमेकैव स्थितिः परापरे न विद्येते इति । अत्रोच्यते 5

## अपरा पल्योपममधिकं च ॥ ३९ ॥

सौधर्मादिष्वेव यथाक्रममपरा स्थितिः पल्योपममधिकं च । अपरा जघन्या निकृष्टेत्यर्थः । परा प्रकृष्टा† उत्कृष्टेत्यनर्थान्तरम् । तत्र सौधर्मे ऽपरा स्थितिः पल्योपममैशाने पल्योपममधिकं च ॥

## सागरोपमे ॥ ४० ॥ 10

सनत्कुमारे‡ ऽपरा स्थितिर्द्वे सागरोपमे ॥

## अधिके च ॥ ४१ ॥

माहेन्द्रे जघन्या स्थितिरधिके द्वे सागरोपमे ॥

## परतः परतः§ पूर्वा पूर्वानन्तरा ॥ ४२ ॥

माहेन्द्रात्परतः पूर्वा परा‖नन्तरा जघन्या स्थितिर्भवति । 15 तद्यथा । माहेन्द्रे परा स्थितिर्विशेषाधिकानि सप्त सागरोपमाणि सा ब्रह्मलोके जघन्या भवति । ब्रह्मलोके दश सागरोपमाणि

* C त्वजघन्योत्कृष्टा   † C इष्टा ।   ‡ C सानत्कुमारे ।
§ B D only परतः once ।   ‖ C पूर्वा D पूर्वा पूर्वा परानन्तरा ।

परा स्थितिः सा लान्तके जघन्या। एवमा सर्वार्थसिद्धादिति[१]। (विजयादिषु चतुर्षु परा स्थितिस्त्रयस्त्रिंशत्सागरोपमाणि सा त्व*जघन्योत्कृष्टा सर्वार्थसिद्ध इति)॥

## नारकाणां च द्वितीयादिषु ॥ ४३ ॥

5 नारकाणां च द्वितीयादिषु भूमिषु पूर्वा पूर्वा परा स्थितिरनन्तरा परतः परतो ऽपरा भवति। तद्यथा। रत्नप्रभायां नारकाणामेकं सागरोपमं परा स्थितिः सा जघन्या शर्कराप्रभायाम्। त्रीणि सागरोपमाणि परा स्थितिः शर्करा-
10 प्रभायां सा जघन्या वालुकाप्रभायामिति। एवं सर्वासु। तमःप्रभायां द्वाविंशतिः सागरोपमाणि परा स्थितिः सा जघन्या महातमःप्रभायामिति॥

## दश वर्षसहस्राणि प्रथमायाम् ॥ ४४ ॥

प्रथमायां भूमौ नारकाणां दश वर्षसहस्राणि जघन्या स्थितिः॥

---

* B omits

---

१ S तत्र विजयादिषु चतुर्षु जघन्येनैकत्रिंशदुत्कर्षेण द्वात्रिंशत् सर्वार्थसिद्धे त्रयस्त्रिंशत्सागरोपमाण्यजघन्योत्कृष्टा स्थितिः। भाष्यकारेण तु सर्वार्थसिद्धे ऽपि जघन्या द्वात्रिंशत्सागरोपमाण्यधीता तन्न विद्मः केनाप्यभिप्रायेण॥ The passage in bracket does not form part of the text according to S. Mss, and H give it

## भवनेषु च ॥ ४५ ॥

भवनवासिनां च दश वर्षसहस्राणि जघन्या स्थितिः ॥

## व्यन्तराणां च ॥ ४६ ॥

*व्यन्तराणां च देवानां दश वर्षसहस्राणि जघन्या स्थितिः ॥

## परा पल्योपमम् ॥ ४७ ॥

व्यन्तराणां परा स्थितिः पल्योपमं भवति ॥

## ज्योतिष्काणामधिकम् ॥ ४८ ॥

ज्योतिष्काणां देवानामधिकं पल्योपमं परा स्थितिर्भवति ॥

## ग्रहाणामेकम्† ॥ ४९ ॥

ग्रहाणामेकं पल्योपमं परा स्थितिर्भवति ॥

## नक्षत्राणामर्धम् ॥ ५० ॥

नक्षत्राणां देवानां पल्योपमार्धं‡ परा स्थितिर्भवति ॥

## तारकाणां चतुर्भागः ॥ ५१ ॥

तारकाणां च§ पल्योपमचतुर्भागः परा स्थितिः ॥

---

* D adds भवनवासिदेववत् । † D ग्रहाणामेकं ।

‡ D चार्धपल्योपमं । § D omits.

**जघन्या त्वष्टभागः ॥ ५२ ॥**

तारकाणां तु जघन्या स्थितिः पल्योपमाष्टभागः ॥

**चतुर्भागः शेषाणाम् ॥ ५३ ॥**

तारकाभ्यः शेषाणां ज्योतिष्काणां चतुर्भागः पल्योपमस्या-
5 परा स्थितिः ॥

इति तत्त्वार्थाधिगमाख्येऽर्हत्प्रवचनसङ्ग्रहे देवगतिप्रदर्शनो
नाम चतुर्थोऽध्यायः समाप्तः ॥

---

# अथ पञ्चमोऽध्यायः ॥

उक्ता जीवाः । अजीवान्वक्ष्यामः ॥

## अजीवकाया धर्माधर्माकाशपुद्गलाः ॥ १ ॥

धर्मास्तिकायो ऽधर्मास्तिकाय आकाशास्तिकायः पुद्गलास्तिकाय इत्यजीवकायाः । तान् लक्षणतः परस्ताद्वक्ष्यामः । काय*ग्रहणं प्रदेशावयवबहुत्वार्थमद्धासमयप्रतिषेधार्थं च ॥

## द्रव्याणि जीवाश्च ॥ २ ॥ 5

†एते धर्मादयश्चत्वारो प्राणिनश्च‡ पञ्च द्रव्याणि च§ भवन्तीति । उक्तं हि मतिश्रुतयोर्निबन्धो द्रव्येष्वसर्वपर्यायेषु सर्वद्रव्यपर्यायेषु केवलस्येति [ I. 27. 30 ] ॥

## नित्यावस्थितान्यरूपाणि|| ॥ ३ ॥

एतानि द्रव्याणि नित्यानि भवन्ति । तद्भावाव्ययं नित्यमिति¶ 10 [ V. 31 ] वक्ष्यते** ॥ अवस्थितानि च†† । न हि कदाचित्पञ्चत्वं भूतार्थत्वं‡‡ च व्यभिचरन्ति ॥ अरूपाणि च । नैषां रूपमस्तीति । रूपं मूर्तिर्मूर्त्याश्रयाश्च स्पर्शादय इति ॥

---

* B कायसंग्रहणं । † D adds ये । ‡ C जीवाश्च ।
§ D omits || Var. S चरूपीणि । ¶ S adds च ।
** B वक्ष्यति । †† C omits ‡‡ D मूतार्थं ।

रूपिणः पुद्गलाः ॥ ४ ॥

पुद्गला एव रूपिणो भवन्ति । रूपमेषामस्त्येषु वाऽस्तीति रूपिणः ॥

*आ आकाशादेकद्रव्याणि ॥ ५ ॥

5 आ आकाशाद्धर्मादीन्येकद्रव्याण्येव भवन्ति । पुद्गल†जीवास्त्वनेकद्रव्याणीति ॥

निष्क्रियाणि च‡ ॥ ६ ॥

आ आकाशादेव धर्मादीनि निष्क्रियाणि भवन्ति । पुद्गलजीवास्तु क्रियावन्तः । क्रियेति गतिकर्माह[१] ॥

* K B आ आकाशा॰ । † B पुद्गला । ‡ All except D. P निःक्रि॰ ।

[१] While commenting on this Sûtra S. says तथा चावश्यकसिद्धान्तहृदयेन विशेषावश्यककारेण नमस्कारनिर्युक्तौ शब्दानित्यत्वप्रतिपादनेऽभ्यधायि and then quotes three verses वयगावयणादयो, &c. In passing I may state that Professor Jacobi (Sacred Books of the East, XXII., p. 268) and Dr. Klatt (Specimen of Jain Onomasticon, p. 14), are mistaken in supposing that सिद्धान्तहृदय is the name of a book in which जिनभद्रगणिक्षमाश्रमण says that knowledge and intuition functionate alternately. आवश्यकसिद्धान्तहृदय is an attribute of जिनभद्रगणि meaning सिद्धान्तवादी. The name of the book, in which the opinion of सिद्धसेनदिवाकर is dissented from, is विशेषणवती ॥

अत्राह । उक्तं भवता प्रदेशावयवबहुत्वं कायसंज्ञमिति । तस्मात्क* एषां† धर्मादीनां प्रदेशावयवनियम इति । अत्रो-च्यते । सर्वेषां प्रदेशाः[१] सन्त्यन्यत्र‡ परमाणोः । अवयवास्तु[२] स्कन्धानामेव । वक्ष्यते ह्यणवः स्कन्धाश्च संघातभेदेभ्य उत्पद्यन्त इति [ V. 25 26 ] ॥ तत्र 5

## असङ्ख्येयाः प्रदेशा धर्माधर्मयोः ॥ ७ ॥

प्रदेशो नामापेक्षिकः सर्वसूक्ष्मस्तु§ परमाणोरवगाह इति ॥

## जीवस्य च ॥ ८ ॥

एकजीवस्य चासङ्ख्येयाः प्रदेशा भवन्तीति ॥

## आकाशस्यानन्ताः ॥ ९ ॥ 10

लोकालोकाकाशस्यानन्ताः प्रदेशाः । लोकाकाशस्य तु धर्माधर्मैकजीवैस्तुल्याः ॥

## सङ्ख्येयासङ्ख्येयाश्च पुद्गलानाम् ॥ १० ॥

सङ्ख्येया असङ्ख्येया अनन्ताश्च पुद्गलानां प्रदेशा भवन्ति । अनन्ता इति वर्तते ॥ 15

---

* B तस्क। † C एष। ‡ C चान्य पर॰। § D सर्वसूक्ष्मस्य।

---

१ S ये न जातुचिद्वस्तुव्यतिरेकेणोपलभ्यन्ते ते प्रदेशाः । ये तु विश्लकलिताः परिकलितमूर्तयः प्रज्ञापथमवतरन्ति ते ऽवयवा इत्यादि विशेषः ॥

२ S धर्माधर्माकाशजीवानां न सन्त्यवयवाः ॥

## नाणोः ॥ ११ ॥

अणोः प्रदेशा न भवन्ति* । अनादिरमध्यो ऽप्रदेशो हि परमाणुः ॥

## लोकाकाशे ऽवगाहः ॥ १२ ॥

अवगाहिनामवगाहो लोकाकाशे भवति ॥

5 ## धर्माधर्मयोः कृत्स्ने ॥ १३ ॥

धर्माधर्मयोः कृत्स्ने लोकाकाशे ऽवगाहो भवतीति ॥

## एकप्रदेशादिषु भाज्यः पुद्गलानाम् ॥ १४ ॥

अप्रदेशसङ्ख्येयासङ्ख्येयानन्तप्रदेशानां पुद्गलानामेकादिष्वाकाशप्रदेशेषु भाज्यो ऽवगाहः । भाज्यो विभाज्यो विकल्प्य इत्य-
10 नर्थान्तरम् । तद्यथा । परमाणोरेकस्मिन्नेव प्रदेशे । द्व्यणुकस्यैकस्मिन् द्वयोश्च । त्र्यणुकस्यैकस्मिन् द्वयोस्त्रिषु च । एवं चतुरणुकादीनां सङ्ख्येयासङ्ख्येयप्रदेशस्यैकादिषु† सङ्ख्येयेष्वसङ्ख्येयेषु च । अनन्तप्रदेशस्य च ॥

## असङ्ख्येयभागादिषु जीवानाम् ॥ १५ ॥

15 लोकाकाशप्रदेशानामसङ्ख्येयभागादिषु जीवानामवगाहो भवति । आ सर्वलोकादिति ॥

अत्राह । को हेतुरसङ्ख्येयभागादिषु जीवानामवगाहो भवतीति । अत्रोच्यते

---

* D सन्ति ।        † D एकप्रदेशादिष ।

## प्रदेशसंहारविसर्गाभ्यां प्रदीपवत् ॥ १६ ॥

जीवस्य हि प्रदेशानां संहारविसर्गाविष्टौ प्रदीपस्येव। तद्यथा। तैलवर्त्यग्न्युपादानप्रवृद्धः प्रदीपो महतीमपि कूटागा*-रशालां प्रकाशयत्यण्वीमपि माणिकावृतः माणिकां द्रोणावृतो द्रोणमाढकावृतश्चाढकं प्रस्थावृतः प्रस्थं पाण्यावृतो पाणिमिति। 5
एवमेव प्रदेशानां संहारविसर्गाभ्यां जीवो महान्तमणुं वा पञ्च-विधं शरीरस्कन्धं धर्माधर्माकाशपुद्गलजीवप्रदेशसमुदायं† व्याप्नो-तीत्यवगाहत इत्यर्थः। धर्माधर्माकाशजीवानां परस्परेण पुद्गलेषु च वृत्तिर्न विरुध्यते ऽमूर्तत्वात् ॥

अत्राह। सति प्रदेशसंहारविसर्गसंभवे कस्मादसङ्ख्येयभागा- 10
दिषु जीवानामवगाहो भवति नैकप्रदेशादिष्विति। अत्रोच्यते। सयोगत्वात्संसारिणां चरमशरीरत्रिभागहीनावगाहित्वाच्च सिद्धा-नामिति ॥

अत्राह। उक्तं भवता धर्मादीनस्तिकायान् परस्ताल्लक्षणतो वक्ष्याम इति [V. 1]। तत्किमेषां लक्षणमिति। अत्रोच्यते 15

## गतिस्थित्युपग्रहो‡ धर्माधर्मयोरुपकारः ॥ १७ ॥

गतिमतां गतेः स्थितिमतां च स्थितेरुपग्रहो धर्माधर्मयो-रुपकारो यथासङ्ख्यम्। उपग्रहो निमित्तमपेक्षा कारणं हेतु-रित्यनर्थान्तरम्। उपकारः प्रयोजनं गुणो ऽर्थ इत्यनर्थान्तरम्§ ॥

---

* B कुटाकार। † A. B समुदयं।
‡ D उपग्रहौ। § C omits this clause.

## आकाशस्यावगाहः ॥ १८ ॥

अवगाहिनां धर्माधर्मपुद्गलजीवानामवगाह आकाशस्योपकारः । धर्माधर्मयोरन्तःप्रवेशसंभवेन पुद्गलजीवानां संयोगविभागै[१]श्चेति ॥

## शरीरवाङ्मनःप्राणापानाः पुद्गलानाम् ॥ १९ ॥

पञ्चविधानि शरीराण्यौदारिकादीनि वाङ्मनः प्राणापानाविति पुद्गलानामुपकारः । तत्र शरीराणि यथोक्तानि [II. 37]। प्राणापानौ च नामकर्मणि व्याख्यातौ [IVII. 10]। द्वीन्द्रियादयो जिह्वेन्द्रिय*योगाद्भाषात्वेन गृह्णन्ति नान्ये । संज्ञिनश्च मनस्त्वेन गृह्णन्ति नान्य इति । वक्ष्यते हि सकषायत्वाज्जीवः कर्मणो योग्यान् पुद्गलानादत्त इति [VIII 2] ॥

किं चान्यत्

## सुखदुःखजीवितमरणोपग्रहाश्च ॥ २० ॥

सुखोपग्रहो दुःखोपग्रहो जीवितोपग्रहो मरणोपग्रहश्चेति पुद्गलानामुपकारः । तद्यथा । इष्टाः स्पर्शरसगन्धवर्णशब्दाः सुखस्योपकारः । अनिष्टा दुःखस्य । स्नानाच्छादनानुलेपन†भोजनादीनि विधिप्रयुक्तानि जीवितस्यानपवर्तनं चायुष्कस्य । विषशस्त्राग्न्यादीनि मरणस्यापवर्तनं चायुष्कस्य ॥

---

* C °संयोबा° ।  † D चानुलेपनापानभोजनादीनि ।

---

१ S चशब्दादन्तःप्रवेशसंभवेनोपकारः संयोगविभागैश्चेति योजनीयम् ॥

अत्राह । उपपन्नं तावदेतत्सोपक्रमाणामपवर्तनीयायुषाम् । अथानपवर्त्यायुषां कथमिति । अत्रोच्यते । तेषामपि जीवितमरणोपग्रहः पुद्गलानामुपकारः । कथमिति चेत्तदुच्यते । कर्मणः स्थितिक्षयाभ्याम् । कर्म हि पौद्गलमिति*। आहारश्च त्रिविधः[१] सर्वेषामेवोपकुरुते । किंकारणम् । शरीरस्थित्युपचयबलवृद्धिप्रीत्यर्थं ह्याहार इति ॥ 5

अत्राह । गृह्णीमस्तावद्धर्माधर्माकाशपुद्गला जीवद्रव्याणामुपकुर्वन्तीति । अथ जीवानां क उपकार इति । अत्रोच्यते

परस्परोपग्रहो जीवानाम् ॥ २१ ॥

परस्परस्य हिताहितोपदेशाभ्यामुपग्रहो जीवानामिति । 10

अत्राह । अथ कालस्योपकारः क इति । अत्रोच्यते

वर्तना परिणामः क्रिया परत्वापरत्वे च कालस्य[२] ॥ २२ ॥

तद्यथा । सर्वभावानां वर्तना† कालाश्रया वृत्तिः । वर्तना

---

* C पुद्गलम् । † H वर्तनामकाला ।

---

१ S ओजोलोमप्रक्षेपलक्षणादिस्त्रिविधः । सर्वेषामित्यनेन संसारिणः परिगृह्यन्ते बाहुल्यमधिकृत्येदमुक्तम् ॥

२ S अत्र केचिदाचक्षते विरोधासंभवाद्वर्तनादिपदत्रयसमासः । अपरे पुनरसमस्तान्येवाधीयते परत्वापरत्वयोः पुनः समास एवान्योन्यापेक्षत्वात् ॥

उत्पत्तिः स्थितिः* प्रथमसमयाश्रया इत्यर्थः ॥ परिणामो द्विविधः । अनादिरादिमांश्च । तं परस्ताद्वक्ष्यामः [ V. 42 ] ॥ क्रिया गतिः । सा त्रिविधा । †प्रयोगगतिर्विस्रसागतिर्मिश्रिकेति ॥ परत्वापरत्वे‡ त्रिविधे प्रशंसाकृते क्षेत्रकृते कालकृते इति । तत्र प्रशंसाकृते परो धर्मः परं§ ज्ञानं§ अपरो§ धर्मो§ अपरमज्ञानमिति । क्षेत्रकृते एकदिक्कालावस्थितयोर्विप्रकृष्टः परो भवति संनिकृष्टो ऽपरः । कालकृते द्विरष्टवर्षाद्वर्षशतिकः परो भवति वर्षशतिकाद्द्विरष्टवर्षो|| ऽपरो भवति ॥ तदेवं प्रशंसाक्षेत्रकृते परत्वापरत्वे वर्जयित्वा वर्तनादीनि कालकृतानि कालस्योपकार इति ॥

अत्राह । उक्तं भवता शरीरादीनि पुद्गलानामुपकार इति । पुद्गलानिति¶ च तन्त्रान्तरीया[१] जीवान्परिभाषन्ते । स्पर्शादिरहितांश्चान्ये** । तत्कथमेतदिति । अत्रोच्यते । एतदादिविप्रतिपत्तिप्रतिषेधार्थं विशेषवचनविवक्षया चेदमुच्यते ॥

---

* B. K omit स्थितिः । H has स्थितिगतिः for स्थितिः which is the reading in S

† D विस्रसागतिर्मिश्रकेति ।

‡ K परापरत्वे and here and hereafter.

§ S interchanges.

|| D द्विरष्टवर्षा ।

¶ D पुद्गला इति ।

** D adds इति प्रत्यभरे ।

---

१ S मायासूनवीयाः Bauddhas

## स्पर्शरसगन्धवर्णवन्तः पुद्गलाः ॥ २३ ॥

स्पर्शः रसः गन्धः वर्ण इत्येवंलक्षणाः पुद्गला भवन्ति । तत्र स्पर्शो ऽष्टविधः कठिनो मृदुर्गुरुर्लघुः शीत उष्णः स्निग्धः रूक्ष इति । रसः पञ्चविधस्तिक्तः कटुः* कषायो ऽम्लो मधुर इति । गन्धो द्विविधः सुरभिरसुरभिश्च । वर्णः पञ्चविधः कृष्णो 5 नीलो लोहितः पीतः शुक्ल इति ॥

किं चान्यत्

## शब्दबन्धसौक्ष्म्यस्थौल्यसंस्थानभेदतमश्छाया-तपोद्योतवन्तश्च ॥ २४ ॥

तत्र शब्दः षड्विधः ततो विततो घनः शुषिरो घर्षो 10 भाषा इति ॥ बन्धस्त्रिविधः । प्रयोगबन्धो विस्रसाबन्धो मिश्र इति । स्निग्धरूक्षत्वाद्भवतीति वक्ष्यते [ V. 32. ] ॥ सौक्ष्म्यं द्विविधमन्त्यमापेक्षिकं च । अन्त्यं परमाणुष्वेव । आपेक्षिकं‡ द्व्यणुकादिषु संघातपरिणामापेक्षं भवति । तद्यथा । आमलका-द्बदरमिति ॥ स्थौल्यमपि द्विविधमन्त्यमापेक्षिकं च । संघात- 15 परिणामापेक्षमेव भवति । तत्रान्त्यं सर्वलोकव्यापिनि महास्कन्धे भवति । आपेक्षिकं बदरादिभ्य आमलकादिष्विति ॥ संस्थान-मनेकविधम् । दीर्घह्रस्वाद्यनित्थंत्व[१]पर्यन्तम् ॥ भेदः पञ्चविधः ।

---

* K कटुकः । † D भाषा । ‡ C adds च ।

---

१ S निरूपयितुं यन्न शक्यं तदनित्थं तद्भावो ऽनित्थंत्वं तत्पर्यन्तमनेकधा संस्थानमिति ॥

औत्कारिकः चौर्णिकः खण्डः प्रतरः अनुतट[१]* इति ॥ **तमश्छायातपोद्योताश्च** परिणामजाः ॥ सर्व एवैते स्पर्शादयः पुद्गलेष्वेव भवन्तीति । अतः पुद्गलास्तद्वन्तः ॥

अत्राह । किमर्थं स्पर्शादीनां शब्दादीनां च पृथक्सूत्रकरणमिति । अत्रोच्यते । स्पर्शादयः परमाणुषु स्कन्धेषु च परिणामजा एव भवन्तीति । शब्दादयस्तु स्कन्धेष्वेव भवन्त्यनेकनिमित्ताश्चेत्यतः पृथक्करणम् ॥

त एते पुद्गलाः समासतो द्विविधा भवन्ति । तद्यथा

**अणवः स्कन्धाश्च ॥ २५ ॥**

उक्तं च

कारणमेव† तदन्त्यं सूक्ष्मो नित्यश्च भवति परमाणुः ।
एकरसगन्धवर्णो द्विस्पर्शः कार्यलिङ्गश्च ॥ इति ।
तत्राणवो ऽबद्धाः स्कन्धास्तु बद्धा एव‡ ॥

अत्राह । कथं पुनरेतद्द्वैविध्यं भवतीति । अत्रोच्यते । स्कन्धास्तावत्

**संघातभेदेभ्य उत्पद्यन्ते ॥ २६ ॥**

संघाताद्भेदात्संघातभेदादिति । एभ्यस्त्रिभ्यः कारणेभ्यः

---

* K B D अनुचटः अनुवटः । † D कारणमेव ।
‡ D स्कन्धाश्च ।

---

१ S अनुतटभेदस्तु वंशेक्षुयष्टित्वगुत्पाटनम् ॥

स्कन्धा उत्पद्यन्ते द्विप्रदेशादयः । तद्यथा । द्वयोः परमाण्वोः संघाताद्द्विप्रदेशः । द्विप्रदेशस्याणोश्च संघातात्त्रिप्रदेशः । एवं सङ्ख्येयानामसङ्ख्येयानामनन्तामनन्तानन्तानां* च प्रदेशानां संघातात्तावत्प्रदेशाः ॥ एषामेव भेदाद्द्विप्रदेशपर्यन्ताः ॥ एत एव† संघातभेदाभ्यामेकसामायिकाभ्यां‡ द्विप्रदेशादयः स्कन्धा 5 उत्पद्यन्ते । अन्यस्य संघातेनान्यतो भेदेनेति ॥

अत्राह । अथ परमाणुः कथमुत्पद्यत इति । अत्रोच्यते ।

भेदादणुः ॥ २७ ॥

भेदादेव परमाणुरुत्पद्यते न संघातादिति ॥

भेदसंघाताभ्यां चाक्षुषाः ॥ २८ ॥ 10

भेदसंघाताभ्यां चाक्षुषाः स्कन्धा उत्पद्यन्ते । अचाक्षुषास्तु यथोक्तात्संघाताद्भेदात्संघातभेदाच्चेति ॥

अत्राह । धर्मादीनि सन्तीति कथं गृह्यत इति । अत्रोच्यते । लक्षणतः ॥

§किं च सतो लक्षणमिति । अत्रोच्यते । 15

उत्पादव्ययध्रौव्ययुक्तं सत् ॥ २९ ॥

उत्पादव्ययौ ध्रौव्यं च युक्तं सतो लक्षणम्‖ । यदुत्पद्यते

---

* K B अनन्तानामनन्तानाम् । † C त एव च ।

‡ Var S एकसमयिकाभ्यां । § B adds अत्राह ।

‖ C has उत्पादव्ययाभ्यां ध्रौव्येण च युक्तं सतो लक्षणम् ॥

यद्भोति यच्च ध्रुवं तत्सत् । अतो ऽन्यदसदिति ॥

[ उत्पादव्ययौ ध्रौव्यं च सतो लक्षणम् । यदिह मनुष्यत्वादिना पर्यायेणाव्ययत* आत्मनो देवत्वादिना पर्यायेणोत्पादः । एकान्तध्रौव्ये आत्मनि तत्तथैकस्वभावतया-वस्थाभेदानुपपत्तेः । एवं च संसारापवर्गभेदाभावः । कल्पितत्वे ऽस्य निःस्वभावतयानुपलब्धिप्रसङ्गात् । सस्वभावत्वे त्वेकान्त-ध्रौव्याभाववतस्तस्यैव तथाभवनादिति । तत्तत्स्वभावतया विरो-धाभावात्तथोपलब्धिसिद्धेः । तदभ्रान्तत्वे प्रमाणाभावः । योगि-ज्ञानप्रमाणाभ्युपगमे त्वभ्रान्तस्तदवस्थाभेदः । इत्थं चैतत् अन्यथा न मनुष्यादेर्देवत्वादीति एवं यमादिपालनानर्थक्यम् । एवं च सन्ति अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः शौचसंतोषतपः-स्वाध्यायेश्वरप्रणिधानानि नियमा इति आगमवचनं वचन-मात्रम् । एवमेकान्ताध्रौव्ये ऽपि सर्वथा तदभावापत्तेः । तत्त्वतो हेतुफलमेवावस्थान्तरमिति सर्वदा तद्भावाभावप्रसङ्गः अहेतु-फलत्वाविशेषात् । न हेतुस्वभावतयोर्ध्वं तद्भावः तत्स्वभावतयैका-न्तेन ध्रौव्यसिद्धेः । यदा हि हेतोरेवासौ स्वभावो यत्तदनन्तरं तद्भावस्तदा ध्रुवो ऽन्वयस्तस्यैव तथाभवनात् । एवं च तुलो-न्नामावनामवद्धेतुफलयोर्युगपद्व्ययोत्पादसिद्धिरन्यथा तदप्युत्पत्ति-रिक्तेतरविकल्पाभ्यामयोगात् । तच्च । मनुष्यादेर्देवत्वमित्यायातं मार्गवैफल्यमागमस्येति एवं सम्यग्दृष्टिः सम्यक्संकल्पः सम्यग्वाग् सम्यग्मार्गः सम्यगार्जवः सम्यग्व्यायामः सम्यक्स्मृतिः सम्यक्स-

* D पर्यायेणाव्ययवत ।

माधिरिति वाग्वैयर्थ्यम् । एवं घटव्ययवत्या मृदः कपालो-
त्पादभावात् उत्पादव्ययध्रौव्ययुक्तं सदिति । एकान्तध्रौव्ये
तत्तथैकस्वभावतयावस्थाभेदानुपपत्तेः । समानं पूर्वेण । एवमेत-
द्व्यवहारतः तथा मनुष्यादिस्थितिद्रव्यमधिकृत्य दर्शितम् ।
निश्चयतस्तु प्रतिसमयमुत्पादादिमत्तया भेदसिद्धेः । अन्यथा 5
तदयोगात् । यथाह* ।

सर्वव्यक्तिषु नियतं क्षणे क्षणे ऽन्यत्वमथ च न विशेषः ।
सत्योश्चित्यपचित्योराकृतिजातिव्यवस्थानात् ॥ १ ॥
नरकादिगतिविभेदो भेदः संसारमोक्षयोश्चैव ।
हिंसादिस्तद्धेतुः सम्यक्त्वादिश्च मुख्य इति ॥ २ ॥ 10
उत्पादादियुते खलु वस्तुन्येतदुपपद्यते सर्वम् ।
तद्रहिते तदभावात् सर्वमपि न युज्यते नीत्या ॥ ३ ॥
निरुपादानो न भवत्युत्पादो† नापि तादवस्थ्ये ऽस्य ।
तद्विक्रिययापि तथा त्रितययुते ऽस्मिन् भवत्येषः ॥ ४ ॥
सिद्धत्वेनोत्पादो व्ययो ऽस्य संसारभावतः ज्ञेयः । 15
जीवत्वेन ध्रौव्यं त्रितययुतं सर्वमेवं तु ॥ ५ ॥

([१]D H एतच्च भाष्यं हारिभद्रवृत्तौ व्याख्यातमस्ति न च
सिद्धसेनीयायामिति) तदित्थं उत्पादव्ययौ ध्रौव्यं चैतत्त्रितय-

* H यदाह । † D निरुपादो न भवति ।

The Manuscript D has the following marginal notes

१ D एतत्सूत्रस्य द्विधा भाष्यपाठः । एक "उत्पादव्ययौ ध्रौव्यं
चैतत्त्रितययुक्तमित्यादिरयं च सिद्धसेनीयवृत्तौ व्याख्यातः" । द्वितीयस्तु

युक्तं सतो लक्षणं । अथवा युक्तं समाहितं त्रिस्वभावं सत् । यदुत्पद्यते यद्व्येति यच्च ध्रुवं तत्सत् अतो ऽन्यदसदिति ॥]

अत्राह । गृह्णीमस्तावदेवंलक्षणं सदिति । इदं तु वाच्यं तत्किं नित्यमाहोस्विदनित्यमिति । अत्रोच्यते ।

5 **तद्भावाव्ययं नित्यम् ॥ ३० ॥**

यत्सतो भावान्न व्येति न व्येष्यति* तन्नित्यमिति ॥

**अर्पितानर्पितसिद्धेः ॥ ३१ ॥**

सच्च† त्रिविधमपि नित्यं चउभे[१] अपि अर्पितानर्पितसिद्धेः । अर्पितं व्यावहारिकमनर्पितमव्यावहारिकं‡ चेत्यर्थः । तच्च§

10 सच्चतुर्विधम् । तद्यथा । द्रव्यास्तिकं मातृकापदास्तिकमुत्पन्नास्तिकं पर्यायास्तिकमिति । एषामर्थपदानि द्रव्यं वा द्रव्ये वा द्रव्याणि वा सत् । असन्नाम नास्त्येव द्रव्यास्तिकस्य ॥ मातृकापदास्तिकस्यापि । मातृकापदं वा मातृकापदे वा मातृकापदानि वा सत् । अमातृकापदं वा अमातृकापदे वा

* B विनश्यति ।      † B K तच्च, D तच्च त्रिविधमपि सत् ।

‡ K व्यवहारिकं ।      § D तच्च ।

"उत्पादव्ययौ ध्रौव्यं च सतो लक्षणं यदिहेत्यादिरयं च हारिभद्रवृत्तौ व्याख्यातः ।

H The Commentary begins — उत्पादव्ययध्रौव्ययुक्तं सदिति सूत्रं उत्पादादिमदेव सदिति सूत्रसमुदायार्थः अवयवार्थं त्वाह यदिहेत्यादिना प्रवचनगर्भसूत्रमेतदिति ।

१ S उभे अपि उत्पादव्ययध्रौव्ययुक्तं सद् तद्भावाव्ययं नित्य चोभयसूत्रोक्तमपि ॥

असमाहृकापदानि वा असत् ॥ उत्पन्नास्तिकस्य । उत्पन्नं वोत्पन्ने वोत्पन्नानि वा सत् । अनुत्पन्नं वानुत्पन्ने वानुत्पन्नानि वासत् ॥ अर्पिते ऽनुपनीते न वाच्यं सदित्यसदिति वा । पर्यायास्तिकस्य सद्भावपर्याये वा सद्भावपर्याययोर्वा सद्भावपर्यायेषु वा आदिष्टं द्रव्यं वा द्रव्ये वा द्रव्याणि वा सत् । असद्भावपर्याये वा असद्भावपर्याययोर्वा असद्भावपर्यायेषु वा आदिष्टं द्रव्यं वा द्रव्ये वा द्रव्याणि वासत् । तदुभयपर्याये वा तदुभयपर्याययोर्वा तदुभयपर्यायेषु वा आदिष्टं द्रव्यं वा द्रव्ये वा द्रव्याणि वा न वाच्यं सदित्यसदिति वा । देशादेशेन विकल्पयितव्यमिति ॥ 5

अत्राह । उक्तं भवता संघातभेदेभ्यः स्कन्धा उत्पद्यन्त इति । तत्किं संयोगमात्रादेव संघातो भवति । आहोस्विदस्ति* कश्चिद्विशेष इति । अत्रोच्यते । सति संयोगे बद्धस्य संघातो भवतीति ॥ 10

अत्राह । अथ कथं बन्धो भवतीति । अत्रोच्यते ।

## स्निग्धरूक्षत्वाद्बन्धः ॥ ३२ ॥ 15

स्निग्धरूक्षयोः पुद्गलयोः स्पृष्टयोर्बन्धो भवतीति ।

अत्राह । किमेष एकान्त इति । अत्रोच्यते ।

## न जघन्यगुणानाम् ॥ ३३ ॥

जघन्यगुणस्निग्धानां जघन्यगुणरूक्षाणां च परस्परेण बन्धो न भवतीति ॥ 20

* D अहोस्विदस्ति ।

अत्राह । उक्तं भवता जघन्यगुणवर्जानां स्निग्धानां रूक्षेण रूक्षाणां च स्निग्धेन सह बन्धो भवतीति । अथ तुल्यगुणयोः किमत्यन्तप्रतिषेध इति । अत्रोच्यते । न जघन्यगुणाना-मित्यधिकृत्येदमुच्यते ॥

5 ## गुणसाम्ये सदृशानाम् ॥ ३४ ॥

गुणसाम्ये सति सदृशानां बन्धो न भवति । तद्यथा । तुल्यगुणस्निग्धस्य तुल्यगुणस्निग्धेन तुल्यगुणरूक्षस्य तुल्यगुण-रूक्षेणेति ।

अत्राह । सदृशग्रहणं किमपेक्षत इति । अत्रोच्यते । गुण-10 वैषम्ये सदृशानां बन्धो भवतीति ॥

अत्राह । किमविशेषेण* गुणवैषम्ये सदृशानां बन्धो भव-तीति । अत्रोच्यते ।

## द्व्यधिकादिगुणानां तु ॥ ३५ ॥

द्व्यधिकादिगुणानां तु सदृशानां बन्धो भवति । तद्यथा । 15 स्निग्धस्य द्विगुणाद्यधिकस्निग्धेन । द्विगुणाद्यधिकस्निग्धस्य †स्निग्धेन । रूक्षस्यापि द्विगुणाद्यधिकरूक्षेण । द्विगुणाद्यधिक-रूक्षस्य रूक्षेण । एकादिगुणाधिकयोस्तु सदृशयोर्बन्धो न भवति । अत्र तुशब्दो व्यावृत्तिविशेषणार्थः प्रतिषेधं व्यावर्त-यति बन्धं च विशेषयति ॥

20 अत्राह । परमाणुषु स्कन्धेषु च ये स्पर्शादयो गुणास्ते किं

* C [illegible] ।  † C एकसमधिकस्निग्धेन ।

व्यवस्थितास्तेष्वाहोस्विदव्यवस्थिता इति । अत्रोच्यते । अव्यवस्थिताः । कुतः । परिणामात् ॥

अत्राह । द्वयोरपि बध्यमानयोर्गुणवत्त्वे* सति कथं परिणामो भवतीति । उच्यते ।

**बन्धे समाधिकौ पारिणामिकौ ॥ ३६ ॥** 5

बन्धे सति समगुणस्य समगुणः परिणामको भवति । अधिकगुणो हीनस्येति‡ ॥

अत्राह । उक्तं भवता द्रव्याणि जीवाश्चेति [V. 2] । तत्किमुद्देशत§ एव द्रव्याणां प्रसिद्धिराहोस्विल्लक्षणतो ऽपीति । अत्रोच्यते । लक्षणतो ऽपि प्रसिद्धिः तदुच्यते— 10

**गुणपर्यायवद् द्रव्यम् ॥ ३७ ॥**

गुणान् लक्षणतो वक्ष्यामः । भावान्तरं संज्ञान्तरं च पर्यायः । तदुभयं यत्र विद्यते तद्द्रव्यम् । गुणपर्याया अस्य सन्त्यस्मिन्वा सन्तीति गुणपर्यायवत् ॥

**कालश्चेत्येके ॥ ३८ ॥** 15

एके त्वाचार्या व्याचक्षते कालो ऽपि द्रव्यमिति ॥

**सो ऽनन्तसमयः ॥ ३९ ॥**

स चैष कालो ऽनन्तसमयः । तत्रैक एव वर्तमानसमयः । अतीतानागतयोस्त्वानन्त्यम् ॥

---

* D K B गुणत्वे ।

‡ D हीनगुणस्येति

§ K उद्देश ।

अत्राह । उक्तं भवता गुणपर्यायवद्द्रव्यमिति [V. 37] । तत्र के गुणा इति । अत्रोच्यते

द्रव्याश्रया निर्गुणा गुणाः ॥ ४० ॥

द्रव्यमेषामाश्रय इति द्रव्याश्रयाः । नैषां गुणाः सन्तीति
5 निर्गुणाः ।

अत्राह । उक्तं भवता बन्धे समाधिकौ पारिणामिकौ* इति [V. 36]। तत्र कः परिणाम इति । अत्रोच्यते

तद्भावः परिणामः ॥ ४१ ॥

धर्मादीनां द्रव्याणां यथोक्तानां च गुणानां स्वभावः†
10 स्वतत्त्वं परिणामः । स द्विविधः ।

अनादिरादिमांश्च ॥ ४२ ॥

तत्रानादिररूपिषु धर्माधर्माकाशजीवेष्विति ।

रूपिष्वादिमान् ॥ ४३ ॥‡

रूपिषु तु द्रव्येषु आदिमान् । परिणामो ऽनेकविधः
15 स्पर्शपरिणामादिरिति§ ॥

---

* C परि०

† B स्वोः भाव D स्वाभाव ।

‡ C Does not mark this and the next one as sûtras but considers this whole to be a part of भाष्य of 42nd sutra.

§ B परिणामादिभिरिति ।

## योगोपयोगौ जीवेषु ॥ ४४ ॥

जीवेष्वरूपिष्वपि सत्सु योगोपयोगौ परिणामावादिमन्तौ भवतः। तत्रोपयोगः पूर्वोक्तः [II. 19]। योगस्तु परस्ताद्वक्ष्यते [VI. 1] ॥

इति तत्त्वार्थाधिगमेऽर्हत्प्रवचनसङ्ग्रहे
पञ्चमोऽध्यायः समाप्तः ॥

---

## अथ षष्ठोऽध्यायः ।

अत्राह । उक्ता जीवाजीवाः । अथास्रवः क इत्यास्रव-प्रसिद्ध्यर्थमिदं प्रक्रम्यते*

### कायवाङ्मनःकर्म योगः ॥ १ ॥

कायिकं कर्म वाचिकं कर्म मानसं कर्म इत्येष त्रिविधो
5 योगो भवति । स एकशो द्विविधः । शुभश्चाशुभश्च । तत्राशुभो
हिंसास्तेयाब्रह्मादीनि कायिकः । सावद्यानृतपरुषपिशुनादीनि
वाचिकः । अभिध्या[1]व्यापाद[2]र्ष्यासूयादीनि मानसः† ॥ अतो
विपरीतः‡ शुभ इति ॥

### स आस्रवः ॥ २ ॥

10 स एष त्रिविधोऽ§पि योग आस्रवसंज्ञो भवति । शुभा-
शुभयोः कर्मणोरास्रवणादास्रवः सरःसलिलावाहिनिर्वाहि[3]-
स्रोतोवत् ॥

### शुभः पुण्यस्य ॥ ३ ॥

शुभो योगः पुण्यस्यास्रवो भवति ॥

---

* DS प्रक्रियते । † C मानसिकः । ‡ D विपरीतं । § B द्विविधो ।

---

१ अभिध्या = coveting another's property.

२ व्यापाद = malice.

३ निर्वाहिन् = discharging.

## अशुभः पापस्य ॥ ४ ॥

तत्र सद्वेद्यादि पुण्यं वक्ष्यते [VIII. 26]। शेषं पापमिति ॥

## सकषायाकषाययोः साम्परायिकेर्यापथयोः ॥ ५ ॥

स एष त्रिविधोऽपि योगः सकषायाकषाययोः साम्परायिकेर्यापथयोराश्रवो भवति यथासङ्ख्यं यथासम्भवं च। सकषायस्य 5 योगः साम्परायिकस्य। अकषायस्येर्यापथस्यैवैकसमयस्थितेः ॥

## अव्रतकषायेन्द्रियक्रियाः पञ्चचतुःपञ्चपञ्चविंशतिसङ्ख्याः पूर्वस्य भेदाः ॥ ६ ॥

पूर्वस्येति सूत्रक्रमप्रामाण्यात्साम्परायिकस्याह। साम्परायिकस्याश्रवभेदाः पञ्च चत्वारः पञ्च पञ्चविंशतिरिति भवन्ति ॥ 10 पञ्च हिंसानृतस्तेयाब्रह्मपरिग्रहाः। प्रमत्तयोगात्प्राणव्यपरोपणं हिंसा [VII. 8] इत्येवमादयो वक्ष्यन्ते ॥ चत्वारः क्रोधमानमायालोभा अनन्तानुबन्ध्यादयो वक्ष्यन्ते [VIII 10]॥ पञ्च प्रमत्तस्येन्द्रियाणि ॥ पञ्चविंशतिः क्रियाः। तत्रेमे क्रियाप्रत्यया यथासङ्ख्यं प्रत्येतव्याः। तद्यथा। सम्यक्त्वमिथ्यात्वप्रयोगसमादाने- 15 र्यापथाः कायाधिकरणप्रदोषपरितापनप्राणातिपाताः दर्शनस्पर्शनप्रत्ययसमन्तानुपातानाभोगाः स्वहस्तनिसर्गविदारणानयनानवकाङ्क्षा आरम्भपरिग्रहमायामिथ्यादर्शनाप्रत्याख्यान* क्रिया इति ॥

---

* D अप्रत्ययाख्यान।

**तीव्रमन्दज्ञाताज्ञातभाववीर्याधिकरणविशेषेभ्यस्त-द्विशेषः ॥ ७ ॥**

सांपरायिकास्रवाणां* †एषामेकोनचत्वारिंशत्साम्परायिकाणां तीव्रभावात् मन्दभावाज्ज्ञातभावादज्ञातभावा‡द्वीर्यविशेषादधि-
5 करणविशेषाच्च विशेषो भवति । लघुर्लघुतरो लघुतमस्तीव्रस्ती-व्रतरस्तीव्रतम इति । तद्विशेषाच्च बन्धविशेषो भवति ॥

अत्राह । तीव्रमन्दादयो भावा लोकप्रतीताः । वीर्यं च जीवस्य क्षायोपशमिकः क्षायिको वा भाव इत्युक्तम् [II 4. 5] । अथाधिकरणं किमिति । अत्रोच्यते

10 **अधिकरणं जीवाजीवाः ॥ ८ ॥**

अधिकरणं द्विविधम् । द्रव्याधिकरणं भावाधिकरणं च । तत्र द्रव्याधिकरणं छेदनभेदनादि शस्त्रं च दशविधम् । भावाधिकरणमष्टोत्तरशतविधम् [VI 9] । एतदुभयं जीवाधि-करणमजीवाधिकरणं च ॥ तत्र

15 **आद्यं संरम्भसमारम्भारम्भयोगकृतकारितानुमत§-कषायविशेषैस्त्रिस्त्रिस्त्रिश्चतुश्चैकशः ॥ ९ ॥**

आद्यमिति सूत्रक्रमप्रामाण्याज्जीवाधिकरणमाह । तत्समास-तस्त्रिविधम् । संरम्भः समारम्भ आरम्भ इति ॥ एतत्पुनरेकशः

---

* Some MSS. omit    † D एषामेकोनचत्वारिंशतः ।

‡ B adds भावविशेषात् ।

§ CDS चनुमति here and throughout this सूत्र ।

कायवाङ्मनोयोगविशेषात्त्रिविधं भवति । तद्यथा । कायसंरम्भः वाक्संरम्भः मनःसंरम्भः कायसमारम्भः वाक्समारम्भः मनःसमारम्भः कायारम्भः वागारम्भः मनआरम्भ इति ॥ एतदप्येकशः* कृत-कारितानुमतविशेषात्त्रिविधं भवति । तद्यथा । कृतकायसंरम्भः कारितकायसंरम्भः अनुमतकायसंरम्भः कृतवाक्संरम्भः कारितवाक्-संरम्भः अनुमतवाक्संरम्भः कृतमनःसंरम्भः कारितमनःसंरम्भः अनुमतमनःसंरम्भः । एवं समारम्भारम्भावपि ॥ तदपि पुनरेकशः कषायविशेषाच्चतुर्विधम्† । तद्यथा । क्रोधकृतकायसंरम्भः मान-कृतकायसंरम्भः मायाकृतकायसंरम्भः लोभकृतकायसंरम्भः क्रोध-कारितकायसंरम्भः मानकारितकायसंरम्भः मायाकारितकाय-संरम्भः लोभकारितकायसंरम्भः क्रोधानुमतकायसंरम्भः मानानु-मतकायसंरम्भः मायानुमतकायसंरम्भः लोभानुमतकायसंरम्भः‡ । एवं वाङ्मनोयोगाभ्यामपि§ वक्तव्यम् । तथा समारम्भारम्भौ ॥ तदेवं जीवाधिकरणं समासेनैकशः षट्त्रिंशद्विकल्पं भवति । त्रिविधमप्यष्टोत्तरशतविकल्पं भवतीति ॥

संरम्भः सकषायः|| परितापनया भवेत्समारम्भः ।
आरम्भः प्राणिवधः¶ त्रिविधो योगस्ततो ज्ञेयः** ॥

अत्राह । अथाजीवाधिकरणं किमिति । अत्रोच्यते

---

* C तदप्ये० । † D adds भवति । ‡ D adds इति । § C मिति ।
|| CD संकल्पः । ¶ C प्राणिवधस्त्वारम्भः ।

** MSS give this verse, but neither S or H comment on this verse, which is very strange when we remember that S mostly comments on every word of भाष्य ।

## निर्वर्तनानिक्षेपसंयोगनिसर्गा द्विचतुर्द्वित्रिभेदाः परम् ॥ १० ॥

परमिति सूत्रक्रमप्रामाण्यादजीवाधिकरणमाह । तत्समास-तश्चतुर्विधम् । तद्यथा । निर्वर्तना निक्षेपः संयोगो निसर्ग इति ॥ तत्र **निर्वर्तनाधिकरणं** द्विविधम् । मूलगुणनिर्वर्तनाधिकरणमुत्तरगुणनिर्वर्तनाधिकरणं च । तत्र* मूलगुण-निर्वर्तना पञ्च शरीराणि वाङ्मनःप्राणापानाश्च† । उत्तरगुण-निर्वर्तना काष्ठपुस्तचित्रकर्मादीनि ॥ **निक्षेपाधिकरणं** चतुर्विधम् । तद्यथा । अप्रत्यवेक्षित‡निक्षेपाधिकरणं दुःप्रमार्जित-निक्षेपाधिकरणं सहसानिक्षेपाधिकरणमनाभोगनिक्षेपाधिकरण-मिति ॥ **संयोगाधिकरणं** द्विविधम् । भक्तपानसंयोजनाधि-करणमुपकरणसंयोज§नाधिकरणं च ॥ **निसर्गाधिकरणं** त्रिविधम् । कायनिसर्गाधिकरणं वाङ्निसर्गाधिकरणं मनो-निसर्गाधिकरणमिति ॥

अत्राह । उक्तं भवता सकषायाकषाययोर्योगः साम्परा-यिकेर्यापथयोरास्रव इति [VI. 5] । साम्परायिकं चाष्टविधं वक्ष्यते [VI. 26] । तत् किं सर्वस्याविशिष्ट आस्रव आहोस्वित्प्रति-विशेषोऽस्तीति । अत्रोच्यते । सत्यपि योगत्वाविशेषे प्रकृतिं प्रकृतिं प्रत्यास्रवविशेषो भवति । तद्यथा

* D omits.　　† D प्राणापानश्च ।
‡ D अप्रत्यपेक्षित K अप्रत्यपेक्षित ।　　§ K संयोग ।

**तत्प्रदोषनिह्नवमात्सर्यान्तरायासादनोपघाता ज्ञानदर्शनावरणयोः ॥ ११ ॥**

आस्रवो* ज्ञानस्य ज्ञानवतां ज्ञानसाधनानां च प्रदोषो निह्नवो मात्सर्यमन्तराय आसादन उपघात इति ज्ञानावरणा†-स्रवा भवन्ति। एतैर्हि ज्ञानावरणं कर्म बध्यते ॥ एवमेव 5 दर्शनावरणस्येति ॥

**दुःखशोकतापाक्रन्दनवधपरिदेवनान्यात्मपरोभय-स्थान्यसद्वेद्यस्य ॥ १२ ॥**

दुःखं शोकस्ताप आक्रन्दनं वधः परिदेवनमित्यात्मसंस्थानि परस्य क्रियमाणान्युभयोश्च क्रियमाणान्यसद्वेद्यस्यास्रवा भवन्तीति ॥ 10

**भूतव्रत्यनुकम्पा‡ दानं सरागसंयमादि योगः क्षान्तिः शौचमिति सद्वेद्यस्य ॥ १३ ॥**

सर्वभूतानुकम्पा अगारिष्वनगारिषु च व्रतिष्वनुकम्पाविशेषो दानं सरागसंयमः संयमासंयमो ऽकामनिर्जरा बालतपो योगः[१] क्षान्तिः शौचमिति सद्वेद्यस्यास्रवा भवन्ति ॥ 15

---

* H omits आस्रवः। † C ज्ञानावरण कर्म D ज्ञानावरणस्य। ‡ K च सभूत।

---

१ S योग = लोकाभिमतनिरवद्यक्रियानुष्ठानं योगः दण्डभावनिवृत्त्यर्थं योगाभिधानम् ॥

**केवलिश्रुतसङ्घधर्मदेवावर्णवादो दर्शनमोहस्य ॥१४॥**

भगवतां परमर्षीणां केवलिनामर्हत्प्रोक्तस्य* च साङ्गोपाङ्गस्य श्रुतस्य चातुर्वर्ण्यस्य सङ्घस्य पञ्चमहाव्रतसाधनस्य† धर्मस्य चतुर्विधानां च देवानामवर्णवादो दर्शनमोहस्यास्रवा‡ इति ॥

5 **कषायोदयात्तीव्रात्मपरिणामश्चारित्रमोहस्य ॥ १५ ॥**

कषायोदयात्तीव्रात्मपरिणाम§श्चारित्रमोहस्यास्रवो भवति ॥

**बह्वारम्भपरिग्रहत्वं च नारकस्यायुषः ॥ १६ ॥**

बह्वारम्भता बहुपरिग्रहता च नारकस्यायुष आस्रवो भवति ॥

**माया तैर्यग्योनस्य ॥ १७ ॥**

10 माया तैर्यग्योनस्यायुष आस्रवो भवति ॥

**अल्पारम्भपरिग्रहत्वं स्वभावमार्दवार्जवं|| च मानुषस्य ॥ १८ ॥**

अल्पारम्भपरिग्रहत्वं स्वभावमार्दवार्जवं¶ च मानुषस्यायुष आस्रवो भवति ॥

---

* K adds वचनस्य । † B साधकस्य K श्रावकस्य ।

‡ D आस्रव । § D तीव्र आत्मपरिणामः ।

|| C ०र्जवत्वं । ¶ D स्वभावमार्दवं स्वभावार्जवं ।

## निःशीलव्रतत्वं च सर्वेषाम् ॥ १९ ॥

निःशीलव्रतत्वं च सर्वेषां नारकतैर्यग्योनमानुषाणामायुषा*-
मास्रवो भवति । यथोक्तानि च ।

अथ दैवस्यायुषः क आस्रव इति । अत्रोच्यते

## सरागसंयमसंयमासंयमाकामनिर्जराबालतपांसि 5
## दैवस्य ॥ २० ॥

संयमो विरतिर्व्रतमित्यनर्थान्तरम् । हिंसानृतस्तेयाब्रह्म-
परिग्रहेभ्यो विरतिर्व्रतमिति [VII 1] वक्ष्यते ॥ संयमासंयमो
देशविरतिरणुव्रतमित्यनर्थान्तरम् । देशसर्वतो ऽणुमहती [VII 2]
इत्यपि† वक्ष्यते‡ ॥ अकामनिर्जरा पराधीनतयानुरोधा§च्चा- 10
कुशलनिवृत्तिराहारादिनिरोधश्च ॥ बालतपः । बालो मूढ
इत्यनर्थान्तरम् तस्य तपो बालतपः । तच्चाग्निप्रवेशमरुत्प्रपात-
जलप्रवेशादि ॥ तदेवं सरागसंयमः संयमासंयमादीनि च॥
दैवस्यायुष आस्रवा भवन्तीति ॥

¶अथ नाम्नः क आस्रव इति । अत्रोच्यते 15

## योगवक्रता विसंवादनं चाशुभस्य नाम्नः ॥ २१ ॥

कायवाङ्मनोयोगवक्रता विसंवादनं चाशुभस्य नाम्न आस्रवो
भवतीति ॥

---

* DS तिर्यग्योनमानुषाणामायुषा । † D omits अपि ।
‡ K वक्ष्यति । § B निरोधाच्च for अनुरोधाच्च ।
|| C सम्यक्त्वं च । ¶ HDC add अत्राह ।

## विपरीतं शुभस्य ॥ २२ ॥

एतदुभयं विपरीतं शुभस्य नाम्न आस्रवो भवतीति ॥ किं चान्यत्

## दर्शनविशुद्धिर्विनयसंपन्नता शीलव्रतेष्वनतिचारो 5 ऽभीक्ष्णं ज्ञानोपयोगसंवेगौ शक्तितस्त्यागतपसी सङ्घसाधुसमाधिवैयावृत्यकरणमर्हदाचार्यबहुश्रुतप्रवचनभक्तिरावश्यकापरिहाणिर्मार्गप्रभावना प्रवचनवत्सलत्वमिति तीर्थकृत्त्वस्य ॥ २३ ॥

परमप्रकृष्टा दर्शनविशुद्धिः। विनयसंपन्नता च। शील-
10 व्रतेष्वात्यन्तिको भृशमप्रमादो ऽनतिचारः। अभीक्ष्णं ज्ञानोप-
योगः संवेगश्च। यथाशक्ति*स्त्यागस्तपश्च। सङ्घस्य साधूनां च
समाधिवैयावृत्यकरणम्[१]। अर्हत्स्वाचार्येषु बहुश्रुतेषु प्रवचने च
परमभावविशुद्धियुक्ता भक्तिः। सामायिकादीनामावश्यकानां
भावतो ऽनुष्ठानस्यापरिहाणिः। सम्यग्दर्शनादेर्मोक्षमार्गस्य निहत्य
15 मानं करणोपदेशाभ्यां प्रभावना। अर्हच्छासनानुष्ठायिनां
श्रुतधराणां† बालवृद्धतपस्विशैक्ष‡ग्लानादीनां च सङ्ग्रहोपग्रहानु-
ग्रहकारित्वं प्रवचनवत्सलत्वमिति। एते गुणाः समस्ता व्यस्ता वा
तीर्थकरनाम्न आस्रवा भवन्तीति ॥

---

* D यथाशक्तितस्त्यागः। † B श्रुतपराणां। ‡ D तपस्विनां शैक्षकग्लानादीनां।

---

१ S संघस्य समाधिकरणम्। साधूनां वैयावृत्यकरणम्। or समाधि and वैयावृत्य to be applied to both.

**परात्मनिन्दाप्रशंसे सदसद्गुणाच्छादनोद्भावने च नीचैर्गोत्रस्य ॥ २४ ॥**

परनिन्दात्मप्रशंसा सद्गुणाच्छादनमसद्गुणोद्भावनं* चात्मपरोभयस्थं नीचैर्गोत्रस्यास्रवा भवन्ति ॥

**तद्विपर्ययो नीचैर्वृत्त्यनुत्सेकौ चोत्तरस्य ॥ २५ ॥** 5

उत्तरस्येति सूत्रक्रमप्रामाण्यादुच्चैर्गोत्रस्याह । नीचैर्गोत्रास्रवविपर्ययो नीचैर्वृत्तिरनुत्सेक[१]श्चोच्चैर्गोत्रस्यास्रवा भवन्ति ॥

**विघ्नकरणमन्तरायस्य ॥ २६ ॥**

दानादीनां विघ्नकरणमन्तरायस्यास्रवो भवतीति । एते साम्परायिकस्याष्टविधस्य पृथक् पृथगास्रवविशेषा भवन्तीति ॥ 10

इति तत्त्वार्थाधिगमे ऽर्हत्प्रवचनसङ्ग्रहे
भाष्यतः षष्ठोऽध्यायः समाप्तः ॥

---

* B adds तत्र ।

---

१ S नीचैर्वर्तनं विनयप्रवणवाक्कायचित्तता । उत्सेको गर्वः । वृत्ति = respectful treatment.

# अथ सप्तमोऽध्यायः ।

अत्राह । उक्तं भवता सद्वेद्यस्यास्रवेषु भूतव्रत्यनुकम्पेति [VI 13] । तत्र किं व्रतं को वा व्रतीति । अत्रोच्यते

**हिंसानृतस्तेयाब्रह्मपरिग्रहेभ्यो विरतिर्व्रतम् ॥ १ ॥**

हिंसाया अनृतवचनात्स्तेयादब्रह्मतः परिग्रहाच्च कायवाङ्मनोभिर्विरतिर्व्रतम् । विरतिर्नाम ज्ञात्वाभ्युपेत्याकरणम् । अकरणं निवृत्तिरुपरमो विरतिरित्यनर्थान्तरम् ॥

**देशसर्वतोऽणुमहती ॥ २ ॥**

एभ्यो हिंसादिभ्य एकदेशविरतिरणुव्रतं सर्वतो विरतिर्महाव्रतमिति ॥

**तत्स्थैर्यार्थं भावनाः पञ्च पञ्च* ॥ ३ ॥**

तस्य पञ्चविधस्य व्रतस्य स्थैर्यार्थमेकैकस्य पञ्च पञ्च भावना भवन्ति । तद्यथा । अहिंसायास्तावदीर्यासमितिर्मनोगुप्तिरेषणासमितिरादाननिक्षेपणासमितिरालोकितपानभोजनमिति ॥

---

* Var. S पञ्चशः पञ्च ।

**सत्यवचनस्या**नुवीचि*भाषणं क्रोधप्रत्याख्यानं लोभप्रत्याख्यान-
मभीरुत्वं हास्यप्रत्याख्यानमिति ॥ **अस्तेयस्या**नुवीच्यवग्रहयाचन-
मभीक्ष्णावग्रहयाचनमेतावदित्यवग्रहाव†धारणं समानधार्मिकेभ्यो
ऽवग्रहयाचनमनुज्ञापितपानभोजनमिति ॥ **ब्रह्मचर्यस्य** स्त्रीपशु-
षण्डकसंसक्तशयनासन‡वर्जनं रागसंयुक्तस्त्रीकथावर्जनं स्त्रीणां 5
मनोहरेन्द्रियालोकन§वर्जनं पूर्वरतानुस्मरणवर्जनं प्रणीतरस-
भोजनवर्जनमिति ॥ **आकिञ्चनस्य** पञ्चानामिन्द्रियार्थानां स्पर्श-
रसगन्धवर्णशब्दानां मनोज्ञानां प्राप्तौ गार्द्ध्यवर्जनममनोज्ञानां
प्राप्तौ द्वेषवर्जनमिति ॥ किं चान्यदिति

## हिंसादिष्विहामुत्र चापायावद्यदर्शनम् ॥ ४ ॥ 10

हिंसादिषु पञ्चस्वास्रवेष्विहामुत्र चापायदर्शनमवद्यदर्शनं च
भावयेत् । तद्यथा । हिंसायास्तावत् **हिंस्रो** हि नित्योद्वेजनीयो
नित्यानुबद्धवैरश्च । इहैव वधबन्धपरिक्लेशादीन्प्रतिलभते प्रेत्य
चाशुभां गतिं‖ गर्हितश्च भवतीति हिंसाया व्युपरमः श्रेयान् ॥
**तथानृतवादी**अश्रद्धेयो भवति। इहैव जिह्वाच्छेदादी¶न्प्रतिलभते 15
मिथ्याभ्याख्यानदुःखितेभ्यश्च बद्धवैरेभ्यस्तदधिकान्दुःखहेतून्प्राप्नोति
प्रेत्य चाशुभां गतिं गर्हितश्च भवतीत्यनृतवचनाद्व्युपरमः श्रेयान् ॥
**तथा स्तेनः** परद्रव्यहरणप्रसक्तमतिः सर्वस्योद्वेजनीयो भवतीति**।

* D वीची । † C अवग्रहधारणं । ‡ D शय्यासन । § H आलोचन ।

‖ Here, and in the following sentences except the last, the word प्राप्नोति seems to have been left out

¶ SD छेदनादीनि । ** C omits इति ।

इहैव चाभिघातवधबन्ध*नहस्तपादकर्णनासो†त्तरौष्ठच्छेदनभेदनसर्वस्वहरणवध्ययातनामारणादीन्प्रतिलभते प्रेत्य चाशुभां गतिं गर्हितश्च भवतीति स्तेयाद्व्युपरमः श्रेयान् ॥ **तथाब्रह्मचारी** विभ्रमोद्भ्रान्तचित्तः विप्रकीर्णेन्द्रियो मदान्धो गज इव निरङ्कुशः शर्म नो लभते। मोहाभिभूतश्च कार्याकार्यानभिज्ञो न किंचिदकुशलं नारभते। परदाराभिगमनकृतांश्च[१] इहैव वैरानुबन्धलिङ्गच्छेदनवधबन्धनद्रव्यापहारादीन्प्रतिलभते ऽपायान्प्रेत्य चाशुभां गतिं गर्हितश्च भवतीत्यब्रह्मणो व्युपरमः श्रेयानिति ॥ तथा **परिग्रहवान्**§ शकुनिरिव मांसपेशीहस्तो ऽन्येषां क्रव्यादशकुनानामिहैव तस्करादीनां गम्यो भवति। अर्जनरक्षणक्षयकृतांश्च दोषान्प्राप्नोति। न चास्य तृप्तिर्भवतीन्धनैरिवाग्नेर्लोभाभिभूतत्वाच्च कार्याकार्यानपेक्षो भवति। प्रेत्य चाशुभां गतिं प्राप्नोति लुब्धो ऽयमिति च गर्हितो भवतीति परिग्रहाद्व्युपरमः श्रेयान ॥ किं चान्यत्

## दुःखमेव वा ॥ ५ ॥

दुःखमेव वा हिंसादिषु भावयेत् ॥ यथा ममाप्रियं दुःखमेवं सर्वसत्त्वानामिति हिंसाया व्युपरमः श्रेयान् ॥ यथा मम मिथ्याभ्याख्यानेनाभ्याख्यातस्य तीव्रं दुःखं भूतपूर्वं भवति च तथा सर्वसत्त्वानामिति अनृतवचनाद्व्युपरमः श्रेयान् ॥ यथा ममेष्टद्रव्यवियोगे दुःखं भूतपूर्वं भवति च तथा सर्वसत्त्वानामिति

* D बन्ध for बन्धन। † K नासो। ‡ S वध्यपान। § D adds च।

१ कृतान् = जनितान् S

स्तेयाद्व्युपरमः श्रेयान् ॥ तथा रागद्वेषात्मकत्वान्मैथुनं दुःखमेव । स्यादेतत्[1]स्पर्शन*सुखमिति तच्च[2] न । कुतः । व्याधिप्रतीकारत्वात्कण्डूपरिगतवच्चाब्रह्मव्याधिप्रतीकारत्वादसुखे ह्यस्मिन्सुखाभिमानो मूढस्य । तद्यथा । तीव्रया त्वक्छोणितमांसानुगतया कण्ड्वा परिगतात्मा काष्ठशकल†लोष्टशर्करानखशुक्तिभिर्विच्छिन्नगात्रो रुधिरार्द्रः कण्डूयमानो दुःखमेव सुखमिति मन्यते । तद्वन्मैथुनोपसेवीति मैथुनाद्व्युपरमः श्रेयान् ॥ ‡तथा परिग्रहवानप्राप्तप्राप्तनष्टेषु काङ्क्षारक्षण§शोकोद्भवं दुःखमेव प्राप्नोतीति|| परिग्रहाद्व्युपरमः श्रेयान् ।[3] इत्येवं भावयतो व्रतिनो व्रते स्थैर्यं भवति ॥ किं चान्यत्

* D स्पर्श ।    † C शिला for शकल ।

‡ D adds परिग्रहेषु अप्राप्तनष्टेषु कांक्षाशोकौ प्राप्तेषु च रक्षणं उपभोगे चावितृप्तिः ।

§ K adds after रक्षण । उपभोगरोषातृप्तिः B adds उपभोगरोषातृप्ति H कांक्षारक्षणोपभोगावितृप्तिशोकोद्भव ।

|| C adds after प्राप्नोतीति । उपभोगे वा वितृप्तिरिति ।

१ S स्यादेतदित्यादिना ग्रन्थेनाशंकते ।

२ S तदित्यनेन स्पर्शनसुखमभिसंबध्यते ।

३ S अतः परिग्रहाद्व्युपरमः श्रेयान् इत्येवं भावयत इत्यादिना दुःखमेवेत्यस्य सूत्रस्य परिसमाप्तिमादर्शयति । ततश्च ये भाष्यमेव कयापि बुद्ध्या सूत्रीकृत्याधीयते "व्याधिप्रतीकारत्वात्कण्डूपरिगतवच्चाब्रह्मेति । तथा परिग्रहे प्राप्तनष्टेषु कांक्षाशोकौ प्राप्तेषु च रक्षणमुपभोगेष्ववितृप्तिरिति" । तदनार्षं सूत्रकरणमिति विज्ञायते । यदि च सूत्रं स्यात्तत उपभोगे चावितृप्तिरित्यावयवस्य विवरणं स्यात् । न चास्ति । तस्मादनार्षं सूत्रद्वयमन्तरालकमिति । एवमित्युक्तेन प्रकारेण भावयतो वासयतः स्थैर्यं व्रतिनो व्रतानां भवति ॥

## मैत्रीप्रमोदकारुण्यमाध्यस्थानि सत्त्वगुणाधिकक्लिश्यमानाविनेयेषु ॥ ६ ॥

भावयेद्यथासङ्ख्यम्। **मैत्रीं*** सर्वसत्त्वेषु। क्षमे ऽहं सर्वसत्त्वानाम्। क्षमये ऽहं सर्वसत्त्वान्। मैत्री मे सर्वसत्त्वेषु। वैरं मम
5 न केनचिदिति ॥ **प्रमोदं**† गुणाधिकेषु। प्रमोदो नाम विनयप्रयोगो‡ वन्दनस्तुतिवर्णवादवैयावृत्त्यकरणादिभिः सम्यक्त्वज्ञानचारित्रतपोधिकेषु साधुषु परात्मोभयकृतपूजाजनितः सर्वेन्द्रियाभिव्यक्तो मनःप्रहर्ष इति ॥ **कारुण्यं** क्लिश्यमानेषु। कारुण्यमनुकम्पा दीनानुग्रह इत्यर्थः। तन्महामोहाभिभूतेषु
10 मतिश्रुतविभङ्गाज्ञानपरिगतेषु विषयतर्षाग्निना दन्दह्यमान§-मानसेषु हिताहितप्राप्तिपरिहारविपरीतप्रवृत्तिषु विविधदुःखार्दितेषु दीनकृपणानाथबालमोमुहवृद्धेषु सत्त्वेषु भावयेत्। तथा हि भावयन् हितोपदेशादिभिस्ताननुगृह्णातीति ॥ **माध्यस्थ्यमविनेयेषु**। माध्यस्थ्यमौदासीन्यमुपेक्षेत्यनर्थान्तरम्। अविनेया
15 नाम मृत्पिण्डकाष्ठकुड्यभूता ग्रहणधारणविज्ञानेहापोहवियुक्ता महामोहाभिभूता दुष्टावग्राहिताश्च। तेषु माध्यस्थ्यं भावयेत्। न हि तत्र वक्तुर्हितोपदेशसाफल्यं भवति ॥ किं चान्यत्

## जगत्कायस्वभावौ च संवेगवैराग्यार्थम् ॥ ७ ॥

---

* H मैत्रो। † H प्रमोदा। ‡ D विनयप्रयोगबन्दन। § DS दह्यमान।

जगत्कायस्वभावौ च भावयेत् संवेगवैराग्यार्थम् । तत्र **जगत्स्वभावो** द्रव्याणामनाद्यादिम*त्परिणामयुक्ताः प्रादुर्भावतिरोभावस्थित्यन्यतानुग्र[१]हविनाशाः । **कायस्वभावो** ऽनित्यता दुःखहेतुत्वं निःसारताशुचित्वमिति ॥ एवं ह्यस्य भावयतः संवेगो वैराग्यं च भवति। तत्र **संवेगो** नाम संसारभीरुत्वमारम्भपरिग्रहेषु दोषदर्शनादरतिर्धर्मे बहुमानो धार्मिकेषु च धर्मश्रवणे धार्मिकदर्शने च मनःप्रसाद उत्तरोत्तरगुणप्रतिपत्तौ च श्रद्धेति ॥ **वैराग्यं** नाम शरीरभोगसंसारनिर्वेदोपशान्तस्य बाह्याभ्यन्तरेषूपाधिष्वनभिष्वङ्ग इति ॥

अत्राह । उक्तं भवता हिंसादिभ्यो विरतिर्व्रतमिति[VII. 1]। तत्र का हिंसा नामेति । अत्रोच्यते

## प्रमत्तयोगात्प्राण†व्यपरोपणं हिंसा ॥ ८ ॥

प्रमत्तो यः कायवाङ्मनोयोगैः‡ प्राणव्यपरोपणं करोति सा हिंसा । हिंसा मारणं प्राणातिपातः प्राणवधः देहान्तरसंक्रामणं§ प्राणव्यपरोपणमित्यनर्थान्तरम् ॥

अत्राह । अथानृतं किमिति । अत्रोच्यते

## असदभिधानमनृतम् ॥ ९ ॥

* D adds जगत्स्वभावतो । † K प्राणि ।
‡ B योगव्यापारैः प्राण० । § C क्रमणं ।

१ S अनुग्रहः परस्परोपकारादिलक्षणः ।

असदिति सद्भावप्रतिषेधो ऽर्थान्तरं गर्हा च ॥ तत्र **सद्भावप्रतिषेधो** नाम सद्भूतनिह्नवो ऽभूतोद्भावनं च । तद्यथा । नास्त्यात्मा नास्ति परलोक इत्यादि भूतनिह्नवः । श्यामाकतण्डुलमात्रो ऽयमात्मा अङ्गुष्ठपर्वमात्रो ऽयमात्मा आदित्यवर्णो निःक्रिय इत्येवमाद्यभूतोद्भावनम् ॥ **अर्थान्तरं** यो गां ब्रवीत्यश्वमश्वं च गौरिति ॥ **गर्हेति** हिंसापारुष्यपैशून्यादियुक्तं वचः सत्यमपि गर्हितमनृतमेव[†] भवतीति ॥

अत्राह । अथ स्तेयं किमिति । अत्रोच्यते

**अदत्तादानं स्तेयम् ॥ १० ॥**

स्तेयबुद्ध्या परैरदत्तस्य परिगृहीतस्य[‡] तृणादेर्द्रव्यजातस्यादानं स्तेयम् ॥

अत्राह । अथाब्रह्म किमिति । अत्रोच्यते

**मैथुनमब्रह्म ॥ ११ ॥**

स्त्रीपुंसयोर्मिथुनभावो[§] मिथुनकर्म वा मैथुनं तदब्रह्म ।

अत्राह । अथ परिग्रहः क इति । अत्रोच्यते

**मूर्छा परिग्रहः ॥ १२ ॥**

चेतनावत्स्वचेतनेषु च बाह्याभ्यन्तरेषु द्रव्येषु मूर्छा परिग्रहः । इच्छा प्रार्थना कामो ऽभिलाषः कांक्षा गार्ध्यं मूर्छेत्यनर्थान्तरम् ॥

---

* A भूतनिह्नवः for सद्भूत० । † C omits अनृतं ।

‡ C adds वा । § D मिथुनभावयोर्मिथुनभावो ।

अत्राह । उक्तानि भवता व्रतानि । अथ व्रती क इति । अत्रोच्यते

## निःशल्यो व्रती ॥ १३ ॥

मायानिदानमिथ्यादर्शनशल्यैस्त्रिभिर्वियुक्तो निःशल्यो व्रती भवति । व्रतान्यस्य सन्तीति व्रती । तदेवं निःशल्यो व्रतवान् व्रती भवतीति ॥

## अगार्यनगारश्च ॥ १४ ॥

स एष व्रती द्विविधो भवति । अगारी अनगारश्च । श्रावकः श्रमणश्चेत्यर्थः ॥

अत्राह । को ऽनयोः प्रतिविशेष इति । अत्रोच्यते

## अणुव्रतो ऽगारी ॥ १५ ॥

अणून्यस्य व्रतानीत्यणुव्रतः । तदेवमणुव्रतधरः श्रावको ऽगारी व्रती* भवति ॥

किं चान्यत्

## दिग्देशानर्थदण्डविरतिसामायिकपौष†धोपवासोपभोगपरिभोगा‡तिथिसंविभागव्रतसंपन्नश्च ॥ १६ ॥

एभिश्च दिग्व्रतादिभिरुत्तरव्रतैः संपन्नो ऽगारी व्रती भवति ।

---

* C omits this । † B पोषध everywhere ।

‡ B adds परिमाण, H probably does the same ।

तत्र **दिग्व्रतं** नाम तिर्यगूर्ध्वमधो वा दशानां दिशां यथाशक्ति
गमनपरिमाणाभिग्रहः । तत्परतश्च सर्वभूतेष्वर्थतो ऽनर्थतश्च
सर्वसावद्ययोगनिक्षेपः ॥ **देशव्रतं** नामापवरकगृहग्रामसीमादिषु
यथाशक्ति प्रविचाराय* परिमाणाभिग्रहः । तत्परतश्च सर्वभूते-
ष्वर्थतो ऽनर्थतश्च सर्वसावद्ययोगनिक्षेपः ॥ **अनर्थदण्डो** नामोप-
भोगपरिभोगावस्थागारिणो व्रतिनो ऽर्थः । तद्व्यतिरिक्तो ऽनर्थः ।
तदर्थो दण्डो ऽनर्थदण्डः । तद्विरतिर्व्रतम् ॥ **सामायिकं** नामा-
भिगृह्य कालं सर्वसावद्ययोगनिक्षेपः ॥ **पौषधोपवासो** नाम
पौषधे उपवासः पौषधोपवासः† । पौषधः पर्वेत्यनर्थान्तरम् । सो
ऽष्टमीं चतुर्दशीं पञ्चदशीमन्यतमां वा तिथिमभिगृह्य चतुर्थाद्युप-
वासिना व्यपगतस्नानानुलेपन‡गन्धमाल्यालंकारेण न्यस्तसर्वसावद्य-
योगेन कुशसंस्तारफलकादीनामन्यतमं संस्तारमास्तीर्य स्थानं
वीरासननिषद्यानां वान्यतममास्थाय§ धर्मजागरिकापरेणानु-
ष्ठेयो भवति ॥ **उपभोगपरिभोगव्रतं** नामाशनपानखाद्य||-
स्वाद्यगन्धमाल्यादीनामाच्छादन¶प्रावरणालंकारशयनासनगृह-
यानवाहनादीनां च बहुसावद्यानां वर्जनम् । अल्पसावद्यानामपि
परिमाणकरणमिति ॥ **अतिथिसंविभागो** नाम न्यायागतानां

---

* D प्रतिचाराय । † D omits ।

‡ K स्नानुलेप ।

§ D निषद्यानामन्यतमदास्थाय धर्मजागरिकापरिणामेन ।

|| BK खाद्यास्वाद्य । ¶ C omits आच्छादन ।

कल्पनीयानामन्नपानादीनां द्रव्याणां देशकालश्रद्धा*सत्कार-क्रमोपेतं †परयात्मानुग्रहबुद्ध्या संयतेभ्यो दानमिति ॥

किं चान्यदिति

**मारणान्तिकीं संलेखनां‡ जोषिता ॥ १७ ॥**

कालसंहननदौर्बल्योपसर्गदोषाद्धर्मावश्यकपरिहाणिं वाभितो 5 ज्ञात्वावमौद§र्यचतुर्थषष्ठाष्टमभक्तादिभिरात्मानं संलिख्य|| संयमं प्रतिपद्योत्तमव्रतसंपन्नश्चतुर्विधाहारं प्रत्याख्याय यावज्जीवं भावनानुप्रेक्षापरः स्मृतिसमाधिबहुलो मारणान्तिकीं संलेखनां जोषिता उत्तमार्थस्याराधको भवतीति ॥

एतानि दिग्व्रतादीनि शीलानि भवन्ति । निःशल्यो 10 व्रतीति वचनादुक्तं भवति व्रती नियतं सम्यग्दृष्टिरिति ॥

तत्र

**शङ्काकांक्षाविचिकित्सान्यदृष्टिप्रशंसासंस्तवाः सम्यग्दृष्टेरतीचारा¶ः ॥ १८ ॥**

शङ्का कांक्षा विचिकित्सा अन्यदृष्टिप्रशंसा संस्तवः इत्येते पञ्च 15 सम्यग्दृष्टेरतीचारा भवन्ति । **अतिचारो** व्यतिक्रमः स्खलन**-

* H शुद्धा for श्रद्धा ।

† BK परात्मानुग्रह D परमयात्मानुग्रह० ।

‡ B संलेखिनां ।

§ D अवमोदय ।

|| B संलेख्य ।

¶ KCD omit ।

** C स्खलित ।

मित्यनर्थान्तरम् ॥ अधिगतजीवाजीवादितत्त्वस्यापि भगवतः* शासनं भावतो ऽभिप्रपन्नस्यासंहार्यमतेः† सम्यग्दृष्टेरर्हत्प्रोक्तेषु अत्यन्तसूक्ष्मेष्वतीन्द्रियेषु केवला‡गमग्राह्येष्वर्थेषु यः संदेहो भवति एवं स्यादेवं न स्यादिति सा **शंका** ॥ ऐहलौकिकपारलौकिकेषु
5 विषयेष्वाशंसा **कांक्षा** । सो ऽतिचारः सम्यग्दृष्टेः । कुतः । कांक्षिता ह्यविचारितगुणदोषः समयमतिक्रामति ॥ **विचिकित्सा** नाम इदमप्यस्तीदमपीति मतिविप्लुतिः ॥ अन्यदृष्टिरित्यर्हच्छासनव्यतिरिक्तां दृष्टिमाह । सा द्विविधा । अभिगृहीता§ अनभिगृहीता च । तद्युक्तानां क्रियावादिनामक्रियावादिनाम-
10 ज्ञानि‖कानां वैनयिकानां च **प्रशंसासंस्तवौ** सम्यग्दृष्टेरतिचार¶ इति । अत्राह । प्रशंसासंस्तवयोः कः प्रतिविशेष इति । अत्रोच्यते । ज्ञानदर्शनगुणप्रकर्षोद्भावनं भावतः **प्रशंसा** । **संस्तवस्तु** सोपधं निरुपधं भूताभूतगुणवचनमिति** ॥

## व्रतशीलेषु पञ्च पञ्च यथाक्रमम् ॥ १८ ॥

15 व्रतेषु पञ्चसु शीलेषु च सप्तसु पञ्च पञ्चातीचारा भवन्ति यथाक्रममिति ऊर्ध्वं यद्वक्ष्यामः । तद्यथा ॥

---

* DBK भगवच्छासनं ।  † D असहार्यमतेः ।
‡ B केवलगम C केवलीगम ।  § C adds वा ।
‖ V-ar. S चाज्ञानिकानां ।  ¶ C omits ।
** B सतं परगुणवचनमिति । C भूतगुण० and omits सत्य ।

## बन्धवधच्छविच्छेदातिभारारोपणान्नपाननिरोधाः ॥ २० ॥

त्रसस्थावराणां जीवानां बन्धवधौ त्वक्छेदः काष्ठादीनां पुरुषहस्त्यश्वगोमहिषादीनां चातिभारारोपणं तेषामेव चान्नपाननिरोधः अहिंसाव्रतस्यातिचारा भवन्ति ॥

## मिथ्योपदेशरहस्याभ्याख्यानकूटलेखक्रियान्यासापहारसाकारमन्त्रभेदाः ॥ २१ ॥

एते पञ्च मिथ्योपदेशादयः सत्यवचनस्यातिचारा भवन्ति । तत्र **मिथ्योपदेशो** नाम प्रमत्तवचनमयथार्थवचनोपदेशो विवादेष्व*तिसंधानोपदेश इत्येवमादिः ॥ **रहस्याभ्याख्यानं** नाम स्त्रीपुंसयोः परस्परेणान्यस्य वा रागसंयुक्तं हास्यक्रीडासङ्गादिभी रहस्येनाभिशंसनम् ॥ **कूटलेखक्रिया** लोकप्रतीता ॥ **न्यासापहारो** विस्मरणकृतपरनिक्षेपग्रहणम् ॥ **साकारमन्त्रभेदः** पैशुन्यं गुह्यमन्त्रभेदश्च† ॥

## स्तेनप्रयोगतदाहृतादानविरुद्धराज्यातिक्रमहीनाधिकमानोन्मानप्रतिरूपकव्यवहाराः ॥ २२ ॥

एते पञ्चास्तेयव्रतस्यातिचारा भवन्ति । तत्र स्तेनेषु हिरण्यादिप्रयोगः ॥ स्तेनैराहृतस्य‡ द्रव्यस्य मुधा क्रयेण वा ग्रहणं

---

* D विषादादिष्वतिसं।　† BK अभेदश्च।

‡ C ०ह्रतद्र०।

**तदाहृतादानम्** ॥ **विरुद्धराज्यातिक्रम**स्तेयव्रतस्याति-
चारः । विरुद्धे हि राज्ये सर्वमेव स्तेययुक्तमादानं भवति ॥
**हीनाधिकमानोन्मानप्रतिरूपकव्यवहारः** कूटतुलाकूट-
मानवञ्च*नादियुक्तः क्रयो विक्रयो वृद्धिप्रयोगश्च । **प्रतिरूपक-**
5 **व्यवहारो** नाम सुवर्णरूप्यादीनां द्रव्याणां प्रतिरूपकक्रिया
व्याजीकरणानि चेत्येते पञ्चास्तेयव्रतस्यातिचारा भवन्ति ॥

**परविवाहकरणेत्वरपरिगृहीतापरिगृहीतागमना-
नङ्गक्रीडातीव्रकामाभिनिवेशाः ॥ २३ ॥**

परविवाहकरणमित्वर†परिगृहीतागमनमपरिगृहीतागमन-
10 मनङ्गक्रीडा तीव्र‡कामाभिनिवेश इत्येते पञ्च ब्रह्मचर्यव्रतस्याति-
चारा भवन्ति ॥

**क्षेत्रवास्तुहिरण्यसुवर्णधनधान्यदासीदासकुप्यप्र-
माणातिक्रमाः ॥ २४ ॥**

क्षेत्रवास्तुप्रमाणातिक्रमः हिरण्यसुवर्णप्रमाणातिक्रमः धन-
15 धान्यप्रमाणातिक्रमः दासीदासप्रमाणातिक्रमः कुप्यप्रमाणाति-
क्रम इत्येते पञ्चेच्छापरिमाणव्रतस्यातिचारा भवन्ति ॥

---

* B प्रवचनादि ।

† K adds पर here, B ०करणमक्कारपरपरि० ।

‡ C तीव्रातिकाम० ।

**ऊर्ध्वाधस्तिर्यग्व्यतिक्रमक्षेत्रवृद्धिस्मृत्यन्तर्धानानि ॥ २५ ॥**

ऊर्ध्वव्यतिक्रमः अधोव्यतिक्रमः तिर्यग्व्यतिक्रमः क्षेत्रवृद्धिः स्मृत्यन्तर्धानमित्येते पञ्च दिग्व्रतस्यातिचारा भवन्ति । स्मृत्यन्तर्धानं नाम स्मृतेर्भ्रंशो ऽन्तर्धानमिति ॥ 5

**आनयन*प्रेष्यप्रयोगशब्दरूपानुपातपुद्गलक्षेपाः† ॥ २६ ॥**

द्रव्यस्यानयनं प्रेष्यप्रयोगः शब्दानुपातः रूपानुपातः पुद्गलक्षेप इत्येते पञ्च देशव्रतस्यातिचारा भवन्ति ॥

**कन्दर्पकौकुच्यमौखर्यासमीक्ष्याधिकरणोपभोगाधिकत्वानि‡ ॥ २७ ॥** 10

कन्दर्पः कौकुच्य§ मौखर्यमसमीक्ष्याधिकरणमुपभोगाधिकत्वमित्येते पञ्चानर्थदण्डविरतिव्रतस्यातिचारा भवन्ति । तत्र **कन्दर्पो** नाम रागसंयुक्तो ऽसभ्यो वाक्प्रयोगो हास्यं च ॥ **कौकुच्यं**|| नाम एतदेवोभयं दुष्टकायप्रचार¶संयुक्तम् ॥ **मौखर्य**मसंबद्धबहुप्रलापित्वम् ॥ **असमीक्ष्याधिकरणं** लोकप्रतीतम् ॥ **उपभोगाधिकत्वं** चेति ॥ 15

* V-ar S व्यानायन । † K प्रक्षेपाः । ‡ C adds इति ।

§ V-ar. S. कौत्कुच्यं । || B कौत्कुच्यो ।

¶ D प्रतीचार S perhaps प्रवीचार or प्रकार ।

योगदुःप्रणिधानानादरस्मृत्यनुपस्थापनानि ॥ २८ ॥

कायदुःप्रणिधानं वाग्दुःप्रणिधानं मनोदुःप्रणिधानमनादरः स्मृत्यनुपस्थापनमित्येते पञ्च सामायिकव्रतस्यातिचारा भवन्ति ॥

अप्रत्यवे*क्षिताप्रमार्जितोत्सर्गादाननिक्षेपसंस्ता-
5 रोपक्रम†णानादरस्मृत्यनुपस्थापनानि ॥ २९ ॥

अप्रत्यवेक्षिताप्रमार्जिते उत्सर्गः अप्रत्यवेक्षिताप्रमार्जितस्यादाननिक्षेपौ‡ अप्रत्यवेक्षिताप्रमार्जितः संस्तारोपक्रमः अनादरः स्मृत्यनुपस्थानमित्येते पञ्च पौषधोपवासस्यातिचारा भवन्ति ॥

सचित्तसंबद्धसंमिश्राभिषवदुःपक्वाहाराः ॥ ३० ॥

10 सचित्ताहारः सचित्तसंबद्धाहारः सचित्तसंमिश्राहारः अभिषवाहारः दुःपक्वाहार इत्येते पञ्चोपभोगव्रतस्यातिचारा भवन्ति ॥

सचित्तनिक्षेपपिधानपरव्यपदेशमात्सर्यकालाति-
क्रमाः ॥ ३१ ॥

15 अन्नादेर्द्रव्यजातस्य सचित्ते निक्षेपः§ सचित्तपि||धानं परस्येदमिति परव्यपदेशः मात्सर्यं कालातिक्रम इत्येते पञ्चातिथिसंविभागस्यातिचारा भवन्ति ॥

---

* BK अप्रत्युपेक्षित। † Probably S has उपक्रम।

‡ D आदानं निक्षेपः। § C सचित्तनिक्षेपः

|| C सचित्तापिधान D सचित्तापिधानं।

## जीवितमरणाशंसामित्रानुरागसुखानुबन्धनिदान-करणानि* ॥ ३२ ॥

जीविताशंसा मरणाशंसा मित्रानुरागः सुखानुबन्धो निदा-नकरण†मित्येते मारणान्तिकसंलेखनायाः पञ्चातिचारा भवन्ति ॥

तदेतेषु सम्यक्त्वव्रतशीलव्यतिक्रमस्थानेषु पञ्चषष्टिष्वतिचार- 5
स्थानेषु अप्रमादो न्याय इति ॥

अत्राह । उक्तानि व्रतानि व्रतिनश्च । अथ दानं किमिति ।

अत्रोच्यते

## अनुग्रहार्थं स्वस्यातिसर्गो दानम् ॥ ३३ ॥

आत्मपरानुग्रहार्थं स्वस्य द्रव्यजातस्यान्नपानवस्त्रादेः पात्रे‡ 10
ऽतिसर्गो दानम् । किं च

## विधिद्रव्यदातृपात्रविशेषात्त§द्विशेषः ॥ ३४ ॥

विधिविशेषाद् द्रव्यविशेषाद् दातृविशेषात्पात्रविशेषाच्च तस्य दानधर्मस्य विशेषो भवति । तद्विशेषाच्च फलविशेषः ॥

तत्र **विधिविशेषो** नाम देशकालसंपच्छ्रद्धासत्कारक्रमाः‖ कल्प- 15
नीयत्वमित्येवमादिः¶ ॥ **द्रव्यविशेषो** ऽन्नादीनामेव सारजाति-
गुणोत्कर्षयोगः ॥ **दातृविशेषः** प्रतिग्रहीत**र्यनसूया, त्यागे

* H निदानानि not करणानि । † K omits करणम् ।
‡ K पात्रातिसर्गः । § K omits तद् ।
‖ D क्रमः । ¶ BK आदि ।
** दातुस्तत्रनसूया ।

ऽविषादः, अपरिभाविता, दित्सतो ददतो दत्तवतश्च प्रीतियोगः, कुशलाभिसंधिता, दृष्टफलानपेक्षिता, निरुपधत्वमनिदानत्वमिति ॥ **पात्रविशेषः** सम्यग्दर्शनज्ञानचारित्रतपःसंपन्नता इति* ॥

इति तत्त्वार्थाधिगमे ऽर्हत्प्रवचनसङ्ग्रहे

सप्तमो ऽध्यायः समाप्तः ॥

---

* B संपन्नतामिति।

## अष्टमोऽध्यायः ॥

उक्त आस्रवः* । बन्धं वक्ष्यामः । तत्प्रसिद्ध्यर्थ† मिद-मुच्यते ।

### मिथ्यादर्शनाविरतिप्रमादकषाययोगा बन्धहेतवः ॥ १ ॥

मिथ्यादर्शनं अविरतिः प्रमादः कषाया योगा‡ इत्येते पञ्च बन्धहेतवो भवन्ति । तत्र सम्यग्दर्शनाद्विपरीतं **मिथ्यादर्शनम्** । तद् द्विविध§मभिगृहीतमनभिगृहीतं च । तत्राभ्युपेत्यासम्यग्दर्शनपरिग्रहो ऽभिगृहीतमज्ञानिकादीनां त्रयाणां त्रिषष्ठानां‖ कुवादिशतानाम् । शेषमनभिगृहीतम् ॥ यथोक्ताया विरते- र्विपरीता**विरतिः** ॥ **प्रमादः** स्मृत्यनवस्थानं¶ कुशलेष्वनादरो योगदुःप्रणिधानं चैव** प्रमादः ॥ **कषाया** मोहनीये वक्ष्यन्ते [VIII 10] ॥ **योग**स्त्रिविधः पूर्वोक्तः ॥ एषां मिथ्यादर्शनादीनां बन्धहेतूनां पूर्वस्मिन्पूर्वस्मिन्सति नियतमुत्तरेषां भावः । उत्तरोत्तरभावे तु पूर्वेषामनियम इति ॥

---

* DC उक्ता आस्रवाः । † K प्रसिद्धार्थं° ।

‡ K कषाय योग इ° ।

§ KB त्रिविध K adds मिथ्यादर्शनं ।

‖ D त्रिषष्ठादीनां । ¶ D स्मृत्यवस्थानं । ** D omits एव ।

## सकषायत्वाज्जीवः कर्मणो योग्यान्पुद्गला-नादत्ते ॥ २ ॥

सकषायत्वाज्जीवः कर्मणो योग्यान् पुद्गलान् आदत्ते। कर्मयोग्यानिति* अष्टविधे† पुद्गलग्रहणे कर्मशरीरग्रहणयोग्या-
5 नित्यर्थः। नामप्रत्ययाः सर्वतो योगविशेषादिति वक्ष्यते [VIII 25]।

## स बन्धः ॥ ३ ॥

स एष कर्मशरीरपुद्गलग्रहणकृतो बन्धो भवति।

स पुनश्चतुर्विधः।

## प्रकृतिस्थित्यनुभावप्रदेशास्तद्विधयः ॥ ४ ॥

10 प्रकृतिबन्धः स्थितिबन्धः अनुभावबन्ध. प्रदेशबन्ध इति। तत्र

## आद्यो ज्ञानदर्शनावरणवेदनीयमोहनीया-युष्कनामगोत्रान्तरायाः ॥ ५ ॥

आद्य इति सूत्रक्रमप्रामाण्यात्प्रकृतिबन्धमाह। सोऽष्टविधः। तद्यथा। ज्ञानावरणं दर्शनावरणं वेदनीयं मोहनीयं आयुष्कं
15 नाम गोत्रं अन्तरायमिति। किं चान्यत्

## पञ्चनवद्व्यष्टाविंशतिचतुर्द्विचत्वारिंशद्द्वि-पञ्चभेदा यथाक्रमम् ॥ ६ ॥

---

* S perhaps omits this C कर्मणा योग्यानिति।

† B अष्टविधपुद्गलग्रहणे।

स एष प्रकृतिबन्धो ऽष्टविधो ऽपि पुनरेकशः पञ्चभेदः नवभेदः द्विभेदः अष्टाविंशतिभेदः चतुर्भेदः द्विचत्वारिंशद्भेदः द्विभेदः पञ्चभेद इति यथाक्रमं प्रत्येतव्यम् । इत उत्तरं यद्वक्ष्यामः । तद्यथा ।

## मत्यादीनाम्[१] ॥ ७ ॥ 5

ज्ञानावरणं पञ्चविधं भवति[२] । मत्यादीनां ज्ञानानामावरणानि पञ्च । विकल्पांश्चैकश इति ॥

## चक्षुरचक्षुरवधिकेवलानां निद्रानिद्रानिद्राप्रचलाप्रचलाप्रचलास्त्यानगृद्धि[३]वेदनीयानि च ॥ ८ ॥

चक्षुर्दर्शनावरणं अचक्षुर्दर्शनावरणं अवधिदर्शनावरणं केवलदर्शनावरणं निद्रावेदनीयं निद्रानिद्रावेदनीयं प्रचलावेदनीयं प्रचलाप्रचलावेदनीयं स्त्यानगृद्धिवेदनीयमिति दर्शनावरणं नवभेदं भवति । 10

## सदसद्वेद्ये ॥ ९ ॥

सद्वेद्यं असद्वेद्यं च वेदनीयं द्विभेदं भवति । 15

---

१ Var S Var H. मतिश्रुतावधिमनःपर्यायकेवलानाम् ।

२ K मत्यादीनां ज्ञानावरणं पञ्चविधम् । मतिज्ञानावरणं श्रुतज्ञानावरणं अवधिज्ञानावरणं मनःपर्यायज्ञानावरणं केवलज्ञानावरणम् । मत्यादीनां ज्ञानानामावरणानि पञ्च भवन्ति ॥ D as in text, but भवति for इति ।

३ Var S. स्त्यानर्द्धि ।

**दर्शनचारित्रमोहनीयकषायनोकषायवेदनीया-ख्यास्त्रिद्विषोडशनवभेदाः* सम्यक्त्वमिथ्यात्वतदुभ-यानि कषायनोकषायावनन्तानुबन्ध्यप्रत्याख्यान-प्रत्याख्यानावरणसंज्वलनविकल्पाश्चैकशः क्रोधमान-मायालोभाः हास्यरत्यरतिशोकभयजुगुप्सा‡स्त्रीपुं-नपुंसकवेदाः ॥ १० ॥**

त्रिद्विषोडशनवभेदा यथाक्रमम्§। मोहनीयबन्धो द्विविधो दर्शनमोहनीयाख्यश्चारित्रमोहनीयाख्यश्च । तत्र दर्शनमोह-नीयाख्यस्त्रिभेदः । तद्यथा । मिथ्यात्ववेदनीयं सम्यक्त्ववेदनीयं सम्यग्मिथ्यात्ववेदनीयमिति । चारित्रमोहनीयाख्यो द्विभेदः कषायवेदनीयं नोकषायवेदनीयं चेति । तत्र कषायवेद-नीयाख्यः षोडशभेदः । तद्यथा । अनन्तानुबन्धी क्रोधो मानो माया लोभ एवमप्रत्याख्यानकषायः प्रत्याख्यानावरणकषायः संज्वलनकषाय|| इत्येकशः क्रोधमानमायालोभाः षोडश भेदाः ॥ नोकषायवेदनीयं नवभेदम् । तद्यथा । हास्यं रतिः अरतिः शोकः भयं जुगुप्सा पुरुषवेदः स्त्रीवेदः नपुंसकवेद इति नोकषायवेदनीयं नवप्रकारम्¶ । तत्र पुरुषवेदादीनां**

* K adds यथाक्रमम् ।  † DC कषायाकषायौ and K omits it.

‡ K and C separate जुगुप्साः स्त्रीपु० ।  § BK omit this whole.

|| C संज्वलनकषायवेदनीयं चेति and omits from इत्यक० to भेदाः ।

¶ S probably omits from नोकषाय to प्रकारम् ।

** C पुरुषवेदनादीनां ।

तृणकाष्ठकरीषाग्नयो निदर्शनानि भवन्ति । इत्येवं मोहनीयमष्टाविंशतिभेदं भवति ॥

*अनन्तानुबन्धी सम्यग्दर्शनोपघाती । तस्योदयाद्धि† सम्यग्दर्शनं नोत्पद्यते पूर्वोत्पन्नमपि च प्रतिपतति । अप्रत्याख्यानकषायोदयाद्विरतिर्न भवति । प्रत्याख्यानावरणकषायोदयाद्विरताविरतिर्भवत्युत्तमचारित्रलाभस्तु न भवति । संज्वलनकषायोदयाद्यथाख्यातचारित्रलाभो न भवति ॥ 5

क्रोधः कोपो रोषो द्वेषो भण्डनं‡ भाम इत्यनर्थान्तरम् । तस्यास्य क्रोधस्य तीव्रमध्यविमध्यमन्दभावाश्रितानि निदर्शनानि भवन्ति । तद्यथा । पर्वतराजिसदृशः भूमिराजिसदृशः वालुकाराजिसदृशः उदकराजिसदृश इति । तत्र **पर्वतराजिसदृशो** नाम । यथा प्रयोगविस्रसामिश्रकाणामन्यतमेन हेतुना पर्वतराजिरुत्पन्ना नैव कदाचिदपि संरोहति एवमिष्टवियोजनानिष्टयोजनाभिलषितालाभादीनामन्यतमेन हेतुना यस्योत्पन्नः क्रोध आ मरणान्न व्ययं§ गच्छति जात्यन्तरानुबन्धी निरनुनयस्तीव्रानुशयोऽप्रत्यवमर्शश्च भवति स पर्वतराजिसदृशः । तादृशं क्रोधमनुमृता|| नरकेषूपपत्तिं प्राप्नुवन्ति ॥ **भूमिराजिसदृशो** नाम । यथा भूमे¶र्भास्कररश्मिजालात्तस्नेहाया वाय्वभिहताया 10 15

* DK add तत्र ।  † C omits हि ।  ‡ D adds कलिः ।

§ C व्यपगच्छति D आमरणान्नाश्च व्यपगच्छति ।

|| DC here and hereafter अनुगता ।

¶ B भूमौ भा .....स्नेहायां वायुभिर्हतायां ।

राजिरुत्पन्ना वर्षापेक्षसंरोहा परमप्रकृष्टाष्टमास*स्थितिर्भवति एवं यथोक्तनिमित्तो यस्य क्रोधो ऽनेकविधस्थानीयो† दुरनुनयो भवति स भूमिराजिसदृशः । तादृशं क्रोधमनुमृतास्तिर्यग्योनावुपपत्तिं प्राप्नुवन्ति ॥ **वालुकाराजिसदृशो** नाम । यथा
5 वालुकायां काष्ठशलाकाशर्करादीनामन्यतमेन हेतुना राजिरुत्पन्ना वाय्वी‡रणाद्यपेक्षसंरोहार्वाग्मासस्य§ रोहति|| एवं यथोक्तनिमित्तोत्पन्नो यस्य क्रोधो ऽहोरात्रं पक्षं मासं चातुर्मास्यं संवत्सरं वावतिष्ठते स वालुकाराजिसदृशो नाम क्रोधः¶ । तादृशं क्रोधमनुमृता मनुष्येषूपपत्तिं प्राप्नुवन्ति ॥ **उदकराजि-**
10 **सदृशो** नाम । यथोदके दण्डशलाकाङ्गुल्यादीनामन्यतमेन हेतुना राजिरुत्पन्ना द्रवत्वादपामुत्पत्त्यनन्तरमेव संरोहति एवं यथोक्तनिमित्तो** यस्य क्रोधो विदुषो ऽप्रमत्तस्य प्रत्यवमर्शेनोत्पत्त्यनन्तरमेव व्यपगच्छति स उदकराजिसदृशः । तादृशं क्रोधमनुमृता देवेषूपपत्तिं प्राप्नुवन्ति । येषां त्वेष चतुर्विधो
15 ऽपि न भवति ते निर्वाणं प्राप्नुवन्ति†† ॥

मानः स्तम्भो गर्व उत्सेको ऽहंकारो दर्पो मदः स्मय इत्यनर्थान्तरम् । तस्यास्य मानस्य तीव्रादिभावाश्रितानि निदर्शनानि भवन्ति । तद्यथा । शैलस्तम्भसदृशः अस्थिस्तम्भ-

---

* C ० ष्टमासं स्थिति० ।

† C अनेकवर्षास्थायी B अनेकवर्षस्थायी D वर्षस्थायी only.

‡ C वाय्वी० ।  § K अर्धमासस्य ।  || CD संरोहति ।

¶ C omits  ** DC यथोक्तनिमित्तोत्पन्नो ।  †† D प्राप्नुवन्तीति ।

सदृशः दारुस्तम्भसदृशः* लतास्तम्भसदृशः† इति । एषामुपसंहारो निगमनं च क्रोधनिदर्शनैर्व्याख्यातम् ॥

माया प्रणिधिरुपधिर्निकृतिरावरणं‡ वञ्चना दम्भः कूटमतिसन्धानमनार्जवमित्यनर्थान्तरम् । तस्या मायायास्तीव्रादिभावाश्रितानि निदर्शनानि भवन्ति । तद्यथा । वंशकुण§सदृशी मेषविषाणसदृशी गोमूत्रिकासदृशी|| निर्लेखनसदृशीति । अत्राप्युपसंहारनिगमने क्रोधनिदर्शनैर्व्याख्याते ॥ 5

लोभो रागो गार्द्ध्यमिच्छा मूर्च्छा स्नेहः कांक्षाभिष्वङ्ग इत्यनर्थान्तरम् । तस्यास्य लोभस्य तीव्रादिभावाश्रितानि निदर्शनानि भवन्ति । तद्यथा । लाक्षारागसदृशः कर्दमरागसदृशः 10 कुसुम्भरागसदृशः हरिद्रारागसदृश¶ इति । अत्राप्युपसंहारनिगमने क्रोधनिदर्शनैर्व्याख्याते ॥

एषां क्रोधादीनां चतुर्णां कषायाणां प्रत्यनीकभूताः प्रतिघातहेतवो भवन्ति । तद्यथा । क्षमा क्रोधस्य मार्दवं मानस्यार्जवं मायायाः संतोषो लोभस्येति । 15

## नारकतैर्यग्योनमानुषदैवानि ॥ ११ ॥

आयुष्कं चतुर्भेदं नारकं तैर्यग्योनं** मानुषं दैवमिति ।

---

* D काष्ठस्तम्भसदृशः । † C om ‡ KD प्रणिधिः K उपधिम् C आवरणी ।
§ K कुण्ड । || D gives this as 4th and निर्लेखन as 3rd
¶ C m. ** B तिर्यग्योनिं K तैर्यग्योनि K मानुष्य ।

